# वेदान्तरक्षामणिः



## द्वितीयभागः

( आनन्दमयाधिकरणविचारः )



सम्पादकः प्रकाशकश्च

महामहोपाध्यायानन्तकृष्णशास्त्री

[प्रथमसंस्करणम् ]. १९३८ [ मूल्यम्—रूप्यकचतुष्टयम्

# भूमिका

आनन्दमयाधिकरणमुपलक्ष्य द्वैत-विशिष्टाद्वैताद्वैतमतेषु-यस्यैव राद्धान्तस्य सूत्रारूढत्वमिति महानेव विचारस्तत्र तत्र निबन्धेषूपलभ्यते, तत्र श्रीमदप्पय्यदीक्षितेन्द्रा न्यायरक्षामणिमुखेनाद्वैतमतस्यैव सूत्रारूढत्वमिति वृत्तिकारमतनिरासप्रसङ्गेन व्यवातिष्ठिपन्; तन्निरसनेन पाराशर्यविजयाख्यस्वनिबन्धद्वारा तु महाचार्या श्रीविशिष्टाद्वैतसिद्धान्तस्यैव सूत्रारूढत्वं स्थापयन्ति स्म। तयोरेव ग्रन्थयोरावापोद्वापाभ्यां महामहोपाध्याय-श्रीदेशिकाचार्यमहाशयाः श्रीतिरुपतिस्वामिपादाश्च श्रीविशिष्टाद्वैतमतमेव सूत्रारूढमिति श्रीव्याससिद्धान्तमार्तण्ड-परपक्षनिराकृतिनामनिबन्धद्वयेन संगृह्य प्रत्यपीपदन्। वयमपि यथाशक्ति—अद्वैतमार्तण्डेन सामान्यतोऽद्वैतमतमेव सूत्रारूढमिति प्रतिपाद्य, बहोः कालात् पूर्वं संग्रथितमपि वेदान्तरक्षामणिनामानं श्रीभाष्यसमालोचनात्मना प्रसिद्धं निबन्धमिमं प्रियपाठकानां सविध उपहारमुखेन समानिनीषामः।

अत्रहि—श्रीभाष्यं सामान्यतः, विशेषतः परपक्षनिराकृतिं समालोचयाम। यद्यप्यत्र निबन्धे पुनरुक्तयो बहुश एव युक्तिविशेषाणां वर्तन्ते, तथापि परपक्षनिराकृतिकाराणां यथासंभवं विचारक्रममनुसृत्यैवात्र विचारा प्रवर्तिताः, इति तत्रत्यपौनरुक्त्यानामनुसरणपि कर्तव्यं समापतितम्।

अयं हि पूर्वतनवत्सर एव प्रकाशयितव्य इति प्रथमभागभूमिकायां सूचितमासीत, परंतु मद्रासप्रान्तीयाखिलभारतवर्षीयविद्वत्परिषदर्थं धर्मप्रदीपाख्यनिबन्धलेखन-तत्प्रकाशनादौ व्यापारात् यथासमयं न प्राकाश्यं प्रापयितुमपार्यत, साम्प्रतमेव तु तथा कर्तुमशक्यत इति, प्रियपाठकाः सादरं निवेद्यन्ते।

इति विधेयतमः

कलकत्ता
१७-८-३८

अनन्तकृष्णशास्त्री

# वेदान्तरक्षामणौ

## आनन्दमयाधिकरणविषयानुक्रमणिका

* श्रीरस्तु *

# वेदान्तरक्षामणिः ।

## ( द्वितीयो भागः )

मातामह महाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

### आनन्दमयोऽभ्यासात् ।

तैत्तरीयोपनिषत्सु ब्रह्मवल्ली भृगुवल्ली च किं निर्गुणब्रह्मपरोत सगुणब्रह्मपरेति निर्धारणार्थं प्रवृत्तमानन्दमयाधिकरणम् । तत्र यद्यानन्दमयो जीवः, तर्हि पञ्चकोशान्तरं पुच्छं ब्रह्म तदर्थ; यदि तु स एव परमात्मा, तर्हि कोशचतुष्टयान्तरं सगुणं ब्रह्मैव तदर्थः । तत्र प्रथममते—सगुणं ब्रह्मैवानन्दमयपर्यायप्रतिपाद्यम्, निर्गुणं तु ब्रह्म शशशृङ्गायमाणमिति पूर्वपक्षः, अयं च द्वैत-विशिष्टाद्वैतसिद्धान्तानुयायिनां सिद्धान्तः, इति द्वैतादिमतानुयायिनोऽत्र पूर्वपक्षिणः, पुच्छवाक्यद्वाराऽऽनन्दमयपर्यायप्रतिपाद्यं निर्गुणं ब्रह्मैवेति मतानुसारिणोऽद्वैतिन एवात्र सिद्धान्तिनः । द्वितीयमते तु—अद्वैतिनः, कर्माङ्गकर्तृस्तावकतया वेदान्तानां पर्यवसानमिति वादिनो मीमांसका वा "सोऽकामयते" इत्यादिकारणवाक्यसंदर्भाणां जीवपरतयैव योजनमभिप्रयन्तः पूर्वपक्षिणः, सगुणब्रह्मण एवानन्दमयपर्यायप्रतिपाद्यतेति मन्वाना द्वैतादिमताभिमानिनः, अद्वैत्येकदेशिनः केचन वृत्तिकारा वा सिद्धान्तिनः, नतु साङ्ख्यादयः; तन्मते प्रधानकारणताया एव स्वीकारेणाकर्तृस्वभावस्य जीवस्य कारणताया अनङ्गीकारेण "सोऽकामयते"त्यादिवाक्यसंदर्भाणामानन्दमयविषयतया योजनासंभवात् ।

एतेन—जीव एवानन्दमय इति प्रतिपत्तव्यम्; आनन्दप्रचुर इत्युक्तेऽल्पदुःखसद्भावावगमात्, तस्य च जीव एव संभवात् । अतोऽत्र

प्रकरणे जीव एव कारणतयाऽवगम्यत इति साङ्ख्येन तदनुसारिणाऽन्येन वा प्रत्यवस्थान इदमधिकरणमारभ्यते—"आनन्दमयोऽभ्यासादि" त्यादिवादः परास्तः। साङ्ख्येन तदनुसारिणा वा जीवकारणताया अनङ्गीकारेण प्रकरणस्यास्य तत्परताया असंभवात्।

एतेन—"किञ्च जीवस्य कारणत्वं न संभवत्येव; तस्य परिणामायोगेनोपादानत्वासंभवात्" इति स्वोक्तिविरोधोऽपि—व्याख्यातः। यदि त्वभ्युपगम्य जीवकारणत्वं पूर्वपक्षः, परमार्थगत्या तु सिद्धान्त इति मन्यते, तर्हि साङ्ख्येन तदनुयायिना वेति व्यर्थं साङ्ख्यानामेवोपर्यशनिपातनम्।

अयमत्र ह्वैत्यभिमतः सूत्राष्टकप्रतिपाद्यपूर्वपक्षपरिहार निष्कर्षः। आनन्दमयपदे हि मयटोऽन्नमयादिपर्यायेष्विव विकारार्थकत्वमेवाङ्गीकर्तव्यम्, नतु प्राचुर्यार्थकत्वम्, प्रक्रमभङ्गे कारणाभावात्, आनन्दमीमांसाया यस्यानन्दपदप्रतिपाद्यस्य विकारो जीव आनन्दमयः, तस्यैवावाङ्मनसगोचरत्वप्रतिपादनार्थत्वम्, नतु आनन्दमयप्रतिपाद्यस्य प्रचुरानन्दत्वप्रतिपादनार्थत्वम्।

तदुक्तम्—

> "त एते सर्व आनन्दा यत्रैकत्व व्रजन्ति नः।
> कामश्च तन्निमित्तोत्थो ज्ञानं यच्च द्वयात्मकम्।
> तथाऽकामहतत्वं च निष्ठां यत्र प्रपद्यते।
> तमानन्दं विजानीयाम् वर्त्मनाऽनेन वाक्यतः।"—इति

"सैषाऽऽनन्दस्य मीमांसा भवति" इति आनन्दस्यैव मीमांसा प्रस्तूयते, नत्वानन्दमयस्य। आनन्दमयगोचरत्वे हि सर्वस्योपरितनस्य संदर्भस्यानन्दमय एव सर्वत्रानुकृष्येत, नत्वानन्दमात्रम्। आनन्दपदं हि "यदेष आकाश आनन्दो न स्यात्" इत्यादिसन्दर्भेषु ब्रह्मपरमेव सर्वैरपि विवक्ष्यते, यस्यानन्दमयपर्यायान्तिमेन "ब्रह्म पुच्छं प्रतिष्ठे" ति वाक्येन समर्पणम्, "असन्नेव स

भवति'' इत्यादिवाक्येन श्लोकनम्, "उताविद्वानि''त्यादिप्रश्नोत्त-रपरम्परया यद्भावस्योत्क्रान्तिनिरपेक्षं सूर्याग्नि-यमादिभावविल-क्षणत्वस्य प्रतिपादनम्, तस्यैव ब्रह्मणः "सैषानन्दस्य मीमांसा भवति'' इत्यानन्दपदेन ग्रहणम्, नत्वानन्दमयस्य। तदुक्तम्—

"यस्माद् ब्रह्मण आनन्दाद् भीता वातादयोऽवशाः।
स्वकर्मसु प्रवर्तन्ते भृत्याः स्वामिवशा इव।
तस्यानन्दस्य मीमांसा विचारः क्रियतेऽधुना'' इति ॥

तथाच सातिशयानन्द एव हिरण्यगर्भानन्दपर्यन्त आनन्द-मीमांसाविषयः; "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।'' इति स्मृतेः, यः कर्मनिबन्धनः, उत्क्रान्तिसापेक्षश्च। ब्रह्मरूपानन्दस्तु ज्ञानमा-त्राधीनो निरतिशयो नोत्क्रान्तिमपेक्षते, इति हिरण्यगर्भान्तो जीव आनन्दमयपदार्थः, न निरतिशयं ब्रह्मैव, यस्य विकारो हिरण्यगर्भान्तो जीववर्गः, प्राप्यतया विवक्षितं ज्ञेयं तु पुच्छं ब्रह्मेत्येव प्रकृतसन्दर्भार्थः॥

तथाच न ह्यानन्दमयोऽत्र मीमांस्यतया विवक्षितः, किन्तु तत्कारणमानन्दरूपं ब्रह्मैव जिज्ञास्यतया विवक्षितम्; अन्यथा— "स एको ब्रह्मण आनन्दः'' इत्यनेन प्रचुरानन्दस्यानन्दमयस्य स्पष्टं प्रतिपादनात् "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे''ति वाङ्मनसागोचरत्वप्रतिपादनमसङ्गतमेव स्यात्। अस्मन्मते तु— हिरण्यगर्भान्तजीवराशेरपि कारणस्य निरतिशयानन्दरूपस्य ब्रह्मणो वाङ्मनसागोचरत्वस्यैवात्र विवक्षणाद् न कोऽपि दोषः। "यतो वाचो निवर्तन्ते'' इति हि ब्रह्मवल्यामानन्दमीमांसाश्लोकतया, "आनन्द-मयमात्मानमुपसंक्रम्ये'' त्युत्तरश्लोकतया च द्विरभ्यस्यते। इदं च पूर्णानन्दस्यात्मन एव निरुपाधिकस्य कोशपञ्चकातीतस्य प्राप्य-तया विवक्षणात् तत्प्राप्तेश्च नित्यप्राप्तिरूपत्वेन गतिनिरपेक्षत्वाद् गतिसापेक्षप्राप्तियोग्यस्यानन्दमयान्तस्यैव वाङ्मनसगोचरत्वम्, नतु तत्कारणस्यानन्दस्यापीति विवक्षायामेव स्वरसम्; अन्यथा-

ऽन्नमयाद्यानन्दमयान्तस्यैकरूपं प्राप्यत्वं सातिशयानन्दवत्त्वं भेदप्रतीतिविषयत्वं च, ब्रह्ममात्रस्य तु ज्ञानमात्रमेव प्राप्तिः, निरतिशयानन्दरूपत्वं भेदप्रतीत्यविषयत्वं चात्र प्रतिपादितमनुपपन्नमेव स्यात्।

तदुक्तम्--"न साधनमयं किञ्चित्स्वात्मसिद्धावपेक्षते।
स्वतः सिद्धेरविद्याया हानमात्रमपेक्षते॥" इति॥

एतेन—"आनन्दं ब्रह्मणो विद्वानि"ति षष्ठीश्रवणाद् आनन्द-ब्रह्मणोर्गुण-गुणिभावो विवक्ष्यत इति शङ्कापि—परास्ता; "उदरमन्तरं कुरुते" इति भेदनिन्दायां सत्यां ब्रह्मणि कस्यापि भेदस्य कल्पनायाः श्रुत्यसम्मतत्वात्। तदुक्तम्— "आनन्दानन्दिनोश्चात्र न भेदः स्याद् मनागपि। श्रुत्यैवापोदितो यस्माच्छिद्रं कुर्वन् मनागपि"—इति॥

अनेन च स्पष्टमिदमवगम्यते—निर्गुणं ब्रह्मैवोत्क्रान्तिनिरपेक्षतद्भावयोग्यं तैत्तरीयोपनिषत्प्रतिपाद्यम्, नतु सगुणं ब्रह्म; अन्यथा—सगुणब्रह्मभावस्य गतिसापेक्षत्वेऽविवादात्—"उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छती ३ ? आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता ३ उ"इति विद्वदविद्वद्भेदेन गतिसम्भवासम्भवप्रश्न एवानुपपन्नः स्यात्। सति चैवं हिरण्यगर्भान्तो जीव एव ब्रह्माभासरूपः, ब्रह्मप्रतिबिम्बरूपो वा ब्रह्मकार्यत्वाद् आनन्दविकारत्वेनानन्दमयः, नतु कारणं ब्रह्म। न हि तैत्तरीयोपनिषदि कारणस्वरूपं मयडन्तपदप्रतिपाद्यम्; अन्यथा—कार्यमुखेन ब्रह्मवल्यामुपक्रान्तस्य ब्रह्मणः कारणमुखेन भृगुवल्यां प्रतिपादनावसरेऽन्नादिपर्यायेष्विवानन्दपर्यायेऽपि मयट्परित्यागो व्यर्थ एव समापद्येत। अनेन ह्यिदमवगम्यते—अन्नमयादयो यथाऽन्नादिविकाराः, तथाऽऽनन्दमयोऽप्यानन्दविकार एवेति।

एतेन—जीववाचित्वपक्षे हि विकारार्थत्वं न संभवति; तस्यापि नित्यत्वेन घटादेरिव कार्यत्वायोगात्, विकारवाचिनो मयटश्च प्रकृत्य-

र्थान्यथाभावरूपविकारवाचित्वमेव युक्तम् ; तत्रैव प्रयोगदर्शनात्, व्याकरणस्मृतिगतविकारशब्दस्वारस्याच्च। अतोऽत्रानन्दमयः प्रभूतानन्दः, पर एवेत्यादि—परास्तम्।

बिम्बस्यैव प्रतिबिम्बरूपेणान्यथाभावेन प्रतिबिम्बस्य बिम्बकार्यत्वस्य तद्विकार्यत्वस्य वाऽविरोधात्, प्रतिबिम्बस्यानित्यत्वेन जीवस्याप्यनित्यत्वेऽपि बाधकाभावात्, "तत्त्वमसि" "अहं ब्रह्मास्मी"ति बाधायामेव सामानाधिकरण्यमिति मतस्यापि जागरूकत्वात्, अवच्छेदवादेऽप्यवच्छेदकस्य ब्रह्मकार्यत्वेनानित्यत्वेन चावच्छिन्नस्यापि घटाकाशादेरिवान्तःकरणाद्यवच्छिन्नजीवस्य स्वरूपतो नित्यत्वेऽपि विशिष्टरूपेणानित्यत्वात्, जीवस्य क्वचिदुत्पत्तिश्रवणस्य क्वचिन्नित्यत्वश्रवणस्य चौपाधिकमनित्यत्वं स्वरूपतो नित्यत्वमित्येवमेवाविरोधस्य ब्रह्ममीमांसावसेयत्वाच्च। तथाच सूत्रम्—"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति॥

अनेन हि सूत्रेण जीवस्योत्पत्ति-प्रलयावौपाधिकौ, इति निरूप्यत इत्यद्वैतिनो मन्यन्ते। श्रीभाष्यकारास्तु आकाशादिपदानां मुख्यतया परमात्मपराणामपि गौण्या वृत्त्याऽऽकाशादिपरत्वमपि सम्भवतीति प्रतिपादनार्थमिदं सूत्रमिति मन्यन्ते। इदं च शरीरवाचकानां पदानां शरीरिपर्यन्तत्वं मुख्यमिति सिद्धान्तं सूत्रारूढं सिद्धवत्कृत्य विवरणं प्रवृत्तम्, वस्तुतस्तु नायं सिद्धान्तः सूत्रारूढो दर्शनान्तराभिमतो वा; ततश्च जीवस्यापि गौणमनित्यत्वं सूत्रकाराभिमतं गृहीत्वाऽऽनन्दमयपदेन जीवविवक्षायां न कोऽपि विरोधः।

यथाच श्रीभाष्यमते—"चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तः" इति सूत्रे तद्व्यपदेश इति तत्पदं व्यर्थम्, व्यपदेशपदेनैव चराचराश्रयो व्यपदेशो भाक्त इति तदभिमतयोजनाया अन्तरेणापि तत्पदं निर्वाहात्, अद्वैतमत एव तु तत् सार्थकम्; चराचरव्यपा-

अयः तद्व्यदेशः जीवानित्यत्वव्यपदेश इति तदभिमताया योजनायास्तत्पदं विनाऽसम्भवात्, तथाऽन्यत्र व्यक्तम्।

यत्तु—"नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति सूत्रम्, तदिदं स्वरूपतश्चैतन्यरूपेण नित्यत्वमेव जीवस्यापीति बोधनार्थमेवेति तत्रैवाधिकरणे व्यक्तम्। श्रीभाष्यकारा अपि "जीवस्य स्वरूपान्यथाभावलक्षणैवोत्पत्तिरत्र निषिध्यते" इति प्रतिपादयन्त्येव। इयान् विशेषः—यत् ज्ञानसङ्कोच-विकासलक्षणोत्पत्तिरभिमन्यते श्रीभाष्यकारैः, अद्वैतिभिस्तु औपाधिकमनित्यत्वमुत्पत्तिर्वाऽभिमन्यत इति। इदमेवाभिप्रेत्योक्तम्—"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति॥

अयमाशयः—जीव ईश्वरश्च न स्वरूपतः कार्यम्, कारणं वा, किन्तूपाधेः कार्यत्वात् कारणत्वाच्च कार्यम्, कारणं वा। तथाच जीवस्यापि कथंचन कार्यत्वमवच्छेदवादेन, मुख्यतया प्रतिबिम्बवादेन वा कार्यत्वमद्वैतिनो मन्यन्त एव, इति कथं वा नानन्दरूपब्रह्मविकारत्वासंभवो जीवस्य? सति चैवं मयडर्थस्य विकारस्य जीवेऽपि संभवात् प्रक्रमभङ्गेनानन्दमयपदे मयटः प्राचुर्यार्थत्वासंभवाद् नानन्दमयः पर आत्मा, किन्तु पुच्छवाक्यप्रतिपाद्य एव पर आत्मा; तत्रैव "ब्रह्मविदाप्नोति परमि"ति प्रक्रान्तस्य ब्रह्मपदस्याम्नानात्। यद्यपि—"अन्योऽन्तर आत्माऽऽनन्दमयः"इत्यात्मपदं ब्रह्मपदसमानार्थकं "तस्माद्वा एतस्मादात्मनः"इति वाक्ये ब्रह्मपदस्थाने प्रयुज्यमानमानन्दमयब्रह्मतापक्षेऽपि न विरुद्धम्; तथाप्यन्नमयाद्यमुख्यात्मसमानाधिकरण आत्मशब्दो मुख्यवृत्त्यैवानन्दमयपर्यायमात्र आत्मस्वरूपबोधक इति कल्पनेऽपि प्रक्रमभङ्गो दुरपह्नव एव। तदेवमानन्दमय इत्यत्र विकारार्थकत्वसंभवमभिप्रेत्यानन्दमयाब्रह्मतावादो व्यवस्थापितः।

आनन्दमय इति मयटः प्राचुर्यार्थकत्वेऽपि प्राचुर्यस्य

स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वाद् दुःखाल्पत्वस्य च ब्रह्मण्यसंभवात् आनन्दमयब्रह्मतावादो न युक्तः। यद्यपि प्रचुरप्रकाशश्चन्द्र इत्यादिस्थले चन्द्रे तमोलेशाप्रतीतेर्न प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वं नियतम्, किन्त्वौत्सर्गिकमेव; तथाप्यानन्दमयपदे स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वस्य प्रक्रमप्राप्तपञ्चमकोशत्वोपपादकस्य बाधकप्रमाणाभावाद् उत्सर्गत्यागेऽपि न कारणं पश्यामः। यदि प्रमाणान्तरेणानन्दमयस्य ब्रह्मत्वं सिद्धं स्यात्, तर्हि सत्यमुत्सर्गत्यागेनापि प्रकृते प्राचुर्यस्य न स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमिति युज्येत, परंतु न तत्र प्रमाणलेशोऽपि वर्तते, प्रत्युताकामहतश्रोत्रियसाधर्म्येण सातिशयानन्दवत्त्वेनैवानन्दमयस्यानन्दमीमांसायां प्रक्रमात् पूर्वोक्तरीत्या आनन्दमयाब्रह्मतायामेवोपरितनस्य सर्वस्य संदर्भस्य स्वारस्याच्च तदब्रह्मतायामेव प्रमाणानि वर्तन्ते, इति न प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वबाधसंभवः।

एतेन—परमात्मैवानन्दमयः प्रतिपत्तव्यः; अल्पदुःखावगमस्तु न भवति; प्रचुरप्रकाशश्चन्द्र इत्यादौ तमोलेशसम्बन्धाप्रतीतेस्तथानियमायोगादित्यादि—परास्तम्; नियमायोगेऽप्युत्सर्गत्यागे कारणभावेन दुःखाल्पत्वावगमस्यावारणीयत्वात्।

तथाच नानन्दमयब्रह्मतावादो युक्तः। अत एव—"तस्यैष एव शारीर आत्मा" इति, आनन्दमयस्याप्यान्तरस्यात्र प्रकरणे समाम्नानमुपपद्यते; अन्यथा—"अन्योऽन्तर आत्माऽऽनन्दमयः" इति वाक्यगतेनान्तरपदेनैव विज्ञानमयान्तरत्वमानन्दमयस्यावगंस्यते, इति "तस्यैष एव शारीर आत्मे" ति प्रथमपर्याय इवान्तिमपर्यायेऽपि वितथमेव समापद्यते, अस्मन्मते तु पुच्छवाक्येऽन्तरपदाश्रवणात् आनन्दमयान्तरत्वं पुच्छब्रह्मणः प्रक्रान्तसर्वान्तरत्वोपपदकं "तस्यैष

एवे''तिवाक्याभावे न सिद्ध्येत्, इति तत्सार्थक्यार्थमपि नानन्दमय-ब्रह्मतावादो युक्तः।

एतेन—अतोऽत्रानन्दमयः पर एवात्मा; शारीरत्वमपि निरु-पाधिकं सर्वजगच्छरीरकस्य तस्यैवोपपद्यत इत्याद्यपि—व्याख्या-तम्; "तस्यैष एव शारीर आत्मे''त्यानन्दयमपर्यायानन्तरस्य वाक्यस्य पूर्वोक्तरीत्या वैयर्थ्यापत्त्याऽऽनन्दमयविषयत्वासंभवेन पुच्छब्रह्मविष-यत्वस्यैव संभवेन शरीरपरम्परया प्रदर्श्यमानत्वस्य असङ्कुचितशारी-रत्वस्य वा पुच्छब्रह्मविषयत्व एव संभवेनानन्दमयविषयत्वासंभवात्। शारीरत्वं ह्यसंकुचितमन्नमयादिसर्वकोशाधिष्ठानत्वेन पुच्छब्रह्मणोऽपि संभवत्येव, यदि शरीरित्वमेव शारीरपदेन विवक्षणीयमित्याग्रहः। वस्तुतस्तु—शरीरमुखेनोपदिश्यमानत्वमेव शारीरत्वमत्र विवक्षणी-यम्, नतु शरीरित्वम्; प्राणमयादीनां शरीरित्वस्य भवन्मतरीत्याऽ-संभवात्। अतो नानन्दमयः परमात्मा, किन्तु जीव एव।

अत एवान्नमयादीनामिवानन्दमयस्यापि शोध्यत्वश्रवणमुपप-द्यते। मतान्तरे तु यत्र शोध्यत्वं प्रसाद्यत्वरूपं विवक्षितम्, तत्र न केवलमर्थवैरूप्यम्, किन्तु एकस्यैव शुद्ध्यन्तामितिपदस्यार्थभेद-कल्पनयाऽऽवृत्त्यापत्त्या वाक्यभेदापत्तिरपि। न केवलमियत्, किन्तु शुद्ध्यन्तांपदस्यावृत्तस्य प्रसाद्यत्वपरत्वे लक्षणापि।

एतेन—एवं भक्ति-प्रपत्तिभ्यां प्रसाद्यत्वरूपं शोध्यत्वमपि परमात्मन एवानन्दमयस्य संभवति, न जीवस्येत्यपि—प्रयुक्तम्।

यत्तु—जीवस्य कारणत्वं न संभवत्येव; तस्य परिणामा-योगेनोपादानत्वासंभवात्, जगच्छरीरित्वाभावेन सूक्ष्मजगद्वि-शिष्टत्वस्यापि दुरुपपादत्वात्, ब्रह्मण इव तस्य विशिष्टस्योपादा-नत्वमित्यपि न वक्तुं शक्यम्; वाक्यान्तरानुगुण्याद्वैशिष्ट्योप-योग्यात्मत्वश्रवणाच्चात्रोपादानत्वमपि विवक्षितमेव। अतः कार-णत्वोक्तिरानन्दमयस्य जीवत्वं निवारयतीत्यादिवाक्यजालम्;

तदिदमानन्दमयजीवतावादिभिः "सोऽकामयते" त्यादि वाक्यानां पुच्छब्रह्मविषयत्वस्यैव स्वीकारेणानन्दमयपदबोध्यजीवविषयत्वस्यानङ्गीकारेण पुच्छब्रह्मणः कारणत्वोक्तेरानन्दमयजीवतापक्षाप्रतिकूलत्वेन प्रत्युतानुकूलत्वेन च न क्षोदक्षमम्।

"अत एव—एष ह्येवानन्दयाती' ति जीवानन्दयितृत्वं पुच्छब्रह्मणः प्रतिपादितमप्युपपद्यते। नहीदं वाक्यमानन्दमयस्यानन्दयितृत्वप्रतिपादनपरम्, येन—"आकाशादिकारणत्वेन निर्दिष्टस्यानन्दमयस्य "एष ह्येवानन्दयाती" ति जीवानन्दयितृत्वं व्यपदिश्यत इति जीवादन्य एवानन्दमयः प्रतिपत्तव्य इति शङ्का सावसरा स्यात्। सत्यं "सोऽकामयते" ति "एष ह्येव" इति च पुंलिङ्गेन परामर्शो मान्त्रवर्णिकब्रह्मणः "तस्माद्वा एतस्मादि" ति पुंलिङ्गतदेतच्छब्दाभ्यां प्रक्रमात् पुच्छब्रह्मविषयत्व एव स्वरसः, नानन्दमयविषयत्वे। न ह्यानन्दमयस्य सगुणस्य ब्रह्मणो "बहु स्यां प्रजायेय" इति व्यपदिश्यमानमुपादानत्वनिबन्धनं सर्वप्रपञ्चतादात्म्यं संभवति; सगुणस्य ब्रह्मणः स्वरूपत उपादानत्वासंभवात्, औपाधिकस्योपादानत्वस्य विवक्षणे चाद्वैतमत एव प्रवेशात्। तथाच परिशुद्धस्वभावं शुद्धं ब्रह्मैव पुच्छवदधिष्ठानं "सोऽकामयते" त्यादिवाक्यप्रतिपाद्यम्, इति "सत्यं ज्ञानमनन्तं ब्रह्म" इति मान्त्रवर्णिकत्वमपि पुच्छब्रह्मण एव, नानन्दमयस्य। यथाच पुच्छब्रह्मण एवाज्ञाननिवर्तकवृत्तिविषयत्वमात्रविवक्षाभिप्रायेणैव ब्रह्मवेद्यत्वश्रुतीनाम्, अप्राप्तत्वभ्रमनिवर्तकत्वेनैव प्राप्तिश्रुतीनां च प्रवृत्तिः, न ह्यन्यथा---"उताविद्वानि" त्यादिप्रश्नानामेव संभवः, तथाऽन्यत्र विस्तृतम्, इति—"ब्रह्मविद् ब्रह्मैव भवती" त्यादिश्रुत्यन्तरैकवाक्यतयैव--"ब्रह्मविदाप्नोति परम्" इति वाक्यं स्वार्थबोधकम्, नान्यथा। तथाच—प्राप्यत्वेन वेद्यत्वेन च प्रस्तुतस्यैव प्राप्तृभूतोपासकभिन्नस्य मन्त्रे विवरणमित्यादिशङ्कापि—परास्ता; "यो वेद निहितं गुहायांमि" त्यादिसंदर्भेण ज्ञातृभिन्नमेव ज्ञेयं ब्रह्म, "तत्त्व-

मसी'' त्यादिवाक्यस्वारस्यादपीति निर्धारितत्वेन भेदप्रतीतिकल्पनाया निर्मूलत्वात्। यथाच "तत्त्वमसी''त्यादावपि न भेदे सत्येव शरीरात्मभावनिबन्धनं तादात्म्यमेव, तथान्यत्र व्यक्तम्; शरीरवाचकानां पदानां शरीरिपर्यन्तत्ववादस्य निर्मूलत्वात्।

एतेन—मान्त्रवर्णिकस्य जीवान्यत्वमङ्गीकर्तव्यम्; सत्यादिपदोक्तान सत्त्व-चित्त्व-त्रिविधपरिच्छेदशून्यत्वानां जीवेऽसंभवात्। तस्माद् मान्त्रवर्णिकस्य जीवभिन्नत्वेन तदतिरिक्त आनन्दमयः पर एवेत्याद्यपि—निरस्तम्; अद्वैतिभिर्मान्त्रवर्णिकत्वस्य पुच्छब्रह्मण्येव स्वीकारेणानन्दमयजीवतायामपि मान्त्रवर्णिकस्य जीवान्यत्वाङ्गीकाराविरोधात्। तथाचानन्दमयो जीव एव, न पर इत्येवोरीकर्तव्यम्।

यत्तु—"श्रुति-सूत्रयोर्विरोधे श्रुतेः प्राबल्येन तदनुरोधेन सूत्राणां नेयत्वात्'' इति भामतीवाक्यम्, तदिदं विषयवाक्यं सूत्रस्य किं विवक्षितमिति विशये यत्र सूत्रगतेन पदेन स्वरसतः कस्यचन निर्णीतस्यैव वाक्यस्य प्रतीतिः, कथंचन लक्षणयाऽपि सन्दिग्धस्य च वाक्यस्य प्रतीतिः, तत्र सूत्राणां सन्दिग्धार्थनिर्णयार्थत्वात् लक्षणयाऽपि सन्दिग्धं श्रुतिवाक्यमेव सौत्रेण पदेन विवक्षणीयम्; अन्यथा—"सर्वत्र प्रसिद्धोपदेशात्'', "अत्ता चराचरग्रहणादि''-त्यादौ "सर्वं खल्विदमि'' त्यादीनामेव विषयवाक्यतया ग्रहणमनुपपन्नं स्यात्। एतेन—"तदनन्यत्वमारम्भणशब्दादिभ्यः'' इत्यादि सूत्रमपि व्याख्यातम्; तत्रापि "किंस्वादारम्भणमि''-त्यादिवाक्यान्तरस्यैव विषयतया ग्रहणापत्तेः। सति चैवमानन्दमयपदेनानन्दमयस्यैव स्वरसत उपस्थितत्वेऽपि मयटो विकारार्थत्वे प्राचुर्यार्थत्वे वोभयथाऽप्यानन्दमयजीवत्वस्य निर्णीतत्वात् सन्दिग्धं ब्रह्म पुच्छमेव लक्षणयापि विषयवाक्यतयाऽत्र विवक्षणमर्हति; अभ्यासादिति हेतोस्तत्रैव स्वारस्यात्।

एतेन—आनन्दमय इति पदे मयटो विकारार्थत्वमसम्भवि;

जीव-ब्रह्मणोरुभयोरपि किञ्चन प्रति विकारत्वस्य दुरुपपादतया ब्रह्म-परत्वे जीवपरत्वे वा तस्य तदर्थकत्वासंभवादिति शङ्कापि—परास्ता; ब्रह्मणः किञ्चन प्रति विकारत्वायोगेऽपि जीवस्य पूर्वोक्तरीत्या ब्रह्म-कार्यत्वेन तद्विकारत्वस्य सूपपदत्वात्, आनन्दमयपदेन ब्रह्मविव-क्षाया असंभवेनानङ्गीकाराच्च। न ह्यानन्दमयस्य ब्रह्मत्वे तस्यैवाव-यवित्वमवयवत्वञ्चोभयमुपपद्यते, अवयवावयविभावस्य भेदसापेक्ष-त्वात्, "आनन्द आत्मा" इत्यानन्दस्य वैषयिकानन्दरूपस्यैव मध्य-कायत्वस्यास्माभिर्विवक्षणाद् नास्मन्मते ब्रह्मण एव पुच्छत्व-मध्य-कायत्वे स्वीक्रियेते।

एतेन—आनन्दमयस्य ब्रह्मत्वेऽपि तस्यैवाकारभेदेनावयवित्व-मवयवत्वं चोपपद्यते, कथमेकस्य ब्रह्मणः पुच्छत्व-मध्यकायत्वे? इति पर्यनुयोगे भवतामप्येवमेव वक्तव्यत्वादिति—परास्तम्; आकार-भेदस्य विवक्षणीयस्येदन्तयाऽत्र प्रकरणे बोधनाभावात्, पुच्छपदेना-धारस्यैव पुच्छब्रह्मवाक्ये विवक्षणेनावयवावयविभावस्यास्मन्मतेऽवि-वक्षणात्, शिरःपक्षादिपदानां तु प्रियादीनामवयवत्वकल्पनाया अनौ-चित्याभावेन तेषां यथाश्रुतार्थत्वेऽपि ब्रह्मण आनन्दमयावयवत्वकल्प-नाया असंभवेन पुच्छपदमात्रस्यैवाधारलक्षणत्वस्य स्वीकरसंभवात्, उपासनार्थतया स्वस्यैव स्वावयवत्वकल्पनं हि ब्रह्मण उपास्यतयैव प्रक्रान्तत्व एव संभवति, नतु ज्ञेयत्वेन प्रक्रान्तत्वे, इति "ब्रह्मवि-दाप्नोति परमि"त्यत्र वेद्यतया प्रक्रान्तस्य ब्रह्मण उपास्यतयोपसंहा-रानुपपत्त्यापि न स्वस्यैव स्वावयवत्वकल्पनं संभवति; ब्रह्मप्राधान्य-भङ्गापत्तेः।

यथाच "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति सूत्रस्य प्रियशिरस्त्वादीनां नानन्दमयावयवत्वेनाप्युपास्यतायां तात्पर्यम्, तथा तत्रैवाकरे व्यक्तम्। अस्तुवा प्रियशिरस्त्वादीनामान-न्दमयावयवत्वेनोपास्यता, पुच्छब्रह्मावयवकत्वेनोपास्यता तु न विव-

क्षिता। पुच्छब्रह्मोपदेशार्थं प्रवृत्तेनान्नमयादिपर्यायेण शिरःपक्षपुच्छावयवकत्वेनोपासनासमर्पणेऽप्यानन्दमयपर्याये पुच्छतया निर्दिष्टस्यानन्दमयाधिष्ठानत्वेन तदपेक्षयापि प्रधानत्वेनाप्राधान्यप्रयोजकावयवत्वकल्पनाया अयोगेन तदितरावयवकत्वेनानन्दमयोपास्यता, पुच्छब्रह्मणस्तु प्राधान्येन ज्ञेयतैवेत्येव तात्पर्यमत्रोहनीयम्। तत्र प्रक्रान्तशैल्यपरित्यागेन ब्रह्मोपदेशार्थमेव पुच्छपदेनाधिष्ठानस्य ब्रह्मणोऽत्र विवक्षेति तु निष्कर्षः॥

सति चैवम्—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति वाक्यप्रतिपाद्यं कारणत्वं ब्रह्मणः कार्य-करणविशिष्टजीवाधिष्ठानत्वमात्रम्, नतु कुलालादिवत् केवलनिमित्तकारणत्वम्, न वा मृदादिवत्पणिाम्युपादानत्वं वेति सूचनमर्थसिद्धं भवति। अधिष्ठानत्वं च ब्रह्मणः सद्रूपेण चिद्रूपेण च ज्ञातस्याप्यानन्दरूपेणाज्ञानादेव भवति, ततश्चानन्दात्मनाऽज्ञातं ब्रह्मैवानन्दमयः, तद्रूपेण ज्ञातं तु ब्रह्मैव निर्गुणं परमार्थतः सर्वप्रपञ्चासंबन्धम्, इत्यानन्दात्मनाऽज्ञातमविद्योपहितं ब्रह्म कारणम्, तदेव विद्योपहितं सदेव प्राप्यं भवति, इति प्राप्यं ब्रह्म विद्योपहितमेव, नाविद्योपहितम्, इत्यविद्यासाधारण्येन सर्वस्य ब्रह्मणि कल्पितत्वेन ब्रह्मेतरसर्वमिथ्यात्वसूचनमप्यनेन प्रकरणेन क्रियते॥

सति चैवं ज्ञेयं प्राप्यं च ब्रह्मैवोपसंह्रियते, इत्युपक्रमोपसंहारैकरूप्यमपि सिद्धं भवति। इदं चोपक्रमोपसंहारैकरूप्यमानन्दमये वोत पुच्छब्रह्मणि वेति संदेहस्तु तात्पर्यग्राहकप्रमाणान्तराभ्यासस्यापि समालोचनेनैव निवर्तनीयो भवति, नान्यथेति मनसि निधायैव—"आनन्दमयोऽभ्यासात्" इत्यभ्यासहेतुनिर्देशः। अनेन च ब्रह्मशब्दाभ्यासस्यैवोपरि दर्शनादानन्दमयाभ्यासादर्शनाच्च पुच्छं ब्रह्मैव तात्पर्यविषयं इति ज्ञायत इति सिद्ध्यति। ब्रह्मण एवावयवत्वकल्पनापक्षे तु "ब्रह्मविदाप्नोति परमि"ति प्रक्रान्तं ब्रह्म

प्रियशिरस्त्वादिविशिष्टमेव ज्ञेयं प्राप्यं चेति विवक्षणीयम्। यथाच ब्रह्मप्राप्तिसाधने ज्ञाने भासमानमुपास्यं वा ब्रह्म न प्रियशिरस्त्वादिविशिष्टम्, तस्यानन्दादेरिव ज्ञेयब्रह्मासाधारण्याभावात्, तथा "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति सूत्रत एव व्यक्तम्, इति कथमत्रोपक्रमोसंहारैकरूप्यमपि? केवलब्रह्मण उपक्रमः, प्रियशिरस्त्वादिविशिष्टस्योपसंहार इति तयोर्वैरूप्यात्। अस्मन्मते तु ज्ञेयं ब्रह्म यत् प्रक्रान्तं गुहानिहिताभिन्नतया सर्वकारणतया च, तदेव तस्य कारणत्वमविद्योपहितत्वेन, स्वरूपतश्च ज्ञेयत्वं प्राप्यत्वं च, अविद्यादिस्थूलशरीरान्तं तु कोश इति च ज्ञापयति, इति न कोऽपि विरोधः।

एतेन—कल्पितशिरस्त्वादिविशिष्टपरत्वमेव पर्यायान्तरानुगुणमास्थेयमिति ब्रह्मणोऽपि पुच्छत्वकल्पनं दुस्त्यजम्; अन्यथा रूपकप्रकरणविच्छेदादिति शङ्कापि—परास्ता; भूमविद्यायां "एष तु वा अतिवदति" इति भूयःप्रश्नशैलीपरित्यागेन शैल्यन्तरावलम्बनस्यापि दर्शनेन शैल्यैकरूप्यनियमाभावात्, स्वस्यैव स्वावयवत्वकल्पनस्य निष्प्रयोजनत्वात्, प्रकरणस्यास्य निर्विशेषब्रह्मप्रतिपत्त्यर्थत्वेनोपास्यसगुणविषयत्वायोगाच्च। यथाचास्य प्रकरणस्य निर्विशेषपरत्वमेव, तथा यथावसरं विवेचयिष्यते। एतेन—प्रकरणस्य निर्विशेषपरत्वं तु परस्ताद्विस्तरेण दूषयिष्यत इति—परास्तम्; तत्रैव प्रकरणे तस्य सविस्तरं व्यवस्थापयिष्यमाणत्वात्।

अयं भावः—आनन्दमयपदेन ब्रह्मविवक्षणे किं ब्रह्म प्रियशिरस्त्वादिशिष्टमेव विवक्षणीयम्? उत प्रकृतानन्दमयोपसनामात्रं तत् तादृशं विवक्षणीयम्। आद्ये—"प्रियशिरस्त्वाद्यप्राप्तिरि"ति सूत्रविरोधः, द्वितीये ब्रह्मवल्ली-भृगुवल्योर्भिन्नार्थकत्वापत्तिः; तत्तदवयवविशिष्टतया भृगुवल्ल्याम्—"अन्नं ब्रह्मेति व्यजानात्" इत्यादावन्नादीनामनुपदेशात्। तथाचावचनसिद्धमिदम्—यत् "तस्य

प्रियमेव शिरः" इत्यादिसंदर्भस्यावयवकल्पनापरत्वस्याप्यनङ्गीकारे निरर्थकतैव स्यादि"ति शङ्कापि निरवसरैवेति ; तत्सार्थक्यस्य कथमपि समर्थयितुमशक्यत्वात्, केवलब्रह्मशब्देन प्रक्रमस्य केवल-ब्रह्मशब्देनैवोपसंहार एवोचितत्वेन पुच्छब्रह्मवाक्यस्यैवोपसंहारत्वौ-चित्याच्च। एतेन—आनन्दमयपर्याये ब्रह्मशब्देन समापनस्य "ब्रह्म-विदाप्नोति परमि" त्युपक्रान्तस्यानन्दमय उपसंहार इति ज्ञापनार्थ-तयाऽन्यथासिद्धत्वाच्चेति शङ्कापि—परास्ता; "ब्रह्मविदाप्नोति परम्" इति प्रक्रान्तं प्रियशिरस्त्वादिविशिष्टमेवेति कल्पनाया अयोगेन तत्र तत्समापनस्यासंभवात, पुच्छवाक्य एव तत्समापनस्य पूर्वोक्तरीत्यौचित्याच्च। अत एव—"असन्नेव स भवति" इति वाक्यशेषोऽपि ब्रह्मशब्दघटित एव दृश्यते, नानन्दमयशब्दघटितः। न ह्यानन्दमये प्रियशिरस्त्वादिविशिष्टे सत्त्वासत्त्वसंदेहोऽपि सावसरः; तस्य वाङ्मनसागोचरत्वायोगात्। अधिष्ठानमात्रस्य तु ज्ञेयस्य प्राप्यस्य वा निर्विशेषस्य तु वाङ्मनसागोचरत्वेन सत्त्वासत्त्वशङ्का सावसरैव। अतो निगमनश्लोकसङ्गत्यर्थमपि पुच्छब्रह्मप्राधान्यवाद एव समादरणीयः।

एतेन—पर्यायान्तरश्लोकानां नियमेन पुच्छवद्विषयत्वदर्शनेनास्यापि तद्विषयत्व आवश्यके आनन्दमयस्य च पूर्वोक्तहेतुभिर्ब्रह्मत्वनिश्चय आन-न्दमयात्मब्रह्मादिशब्देष्वन्यतमेन निर्देशे बाधकाभावेन ब्रह्मशब्देन निर्देशस्यानन्दमयप्राधान्यविवक्षाविरोधित्वाभाव इति शङ्कापि न सावस-रेति—सूचितम्।

न हि कस्यापि पर्यायस्य पुच्छवद्विषयकत्वं दृष्टम्; अन्नमय-पर्यायश्लोको हि—"अन्नाद्वै प्रजाः प्रजायन्ते" इत्यन्नमयकारण-मात्रमेवोपश्लोकयति। एतेन—प्राणमय-मनोमय-विज्ञानमयश्लोका अपि—व्याख्याताः; तेषामपि क्रमेण "प्राणं देवा अनुप्राणन्ति" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "विज्ञानं यज्ञं तनुते"

इति श्लोकेषु मयट्प्रकृत्यर्थप्राण-मनो-विषयत्वस्यैव दर्शनात्। सति चैवमानन्दमयपर्यायेऽपि मयट्प्रकृत्यर्थस्यानन्दस्यैव ब्रह्मरूपस्य निगमनश्लोकप्रतिपाद्यत्वमावश्यकं पर्यायान्तरानुगुण्यार्थम्, नत्वानन्दमयविषयकत्वम्, इति पर्यायाणां पुच्छ-तत्कारणविषयकत्वनियम एव श्रुत्याऽवगम्यते, नतु पुच्छवद्विषयकत्वम्, इति निर्मूलमनुपपन्नं च पर्यायाणां पुच्छवद्विषयकत्वदर्शनम्। तथाच नानन्दमयस्य ब्रह्मत्वनिश्चयः।

अयं भावः—"यो वेद निहितं गुहायामि"ति गुहानिहिताभिन्नत्वेन ब्रह्म प्रस्तुतम्; गुहानिहितं च जीवस्वरूपं शरीराद्यात्मवादेन शरीररूपं प्राणरूपं मनोरूपं विज्ञानरूपं कारणशरीररूपं चेति जाग्रत्स्वप्न-सुषुप्त्यवस्थात्रयपर्यालोचनेन ज्ञायते। जाग्रदाद्यवस्थासु शरीरादितादात्म्यापन्नतया प्रतीयमानं जीवस्वरूपमधिष्ठानभूतचैतन्यस्वरूपमात्रं गृहीत्वा जीवाभिन्नम्, शरीरादिरूपं शरीरादिविशिष्टचैतन्यस्वरूपं वा गृहीत्वा तु जीवभिन्नम्। तथाच शरीरादिविशिष्टाद् भिन्नमपि ब्रह्म सर्वाधिष्ठानसर्वान्तरचैतन्यस्वरूपमात्रदृष्ट्या तु गुहानिहिताभिन्नमेवेति निरूपणार्थमेवान्नमयादिपर्यायाणां तदुत्तरसन्दर्भाणां च प्रवृत्तिः। तथाच प्रतीयमानभेदानुवादपूर्वकमभेदोपदेशार्थमेव ब्रह्मवल्ल्याः प्रवृत्तत्वाद् अन्नमयादिपदैरिवानन्दमयपदेनाप्यज्ञानरूपकारणशरीरोपहितः सुषुप्त्यवस्थापन्नो जीव एव विवक्ष्यते। अयं च जीवो यद्यपि जाग्रदाद्यवस्थोपहितजीवादभिन्न एव; अवस्थाभेदेऽपि स्वरूपाभेदात्, तथाप्यवस्थाविशेषमादाय भिन्नोऽपि। तथाचान्नमय-प्राणमय-मनोमय-विज्ञानमयपदैरिवानन्दमयपदेनापि जीवस्यैव विवक्षणेऽपि विज्ञानमयादिपदप्रतिपाद्याद् जीवादानन्दमयस्य भेदेऽपि च गुहानिहिताभिन्नं ज्ञेयं ब्रह्म नानन्दमयपदार्थः, किन्तु पुच्छवाक्यार्थ एव।

एतेन—साक्षादेव स्वशब्देनानन्दमयस्य जीवाद् भेदो व्यपदिश्यते—,

"विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दयः" इति। अत्र विज्ञानमय इति जीव उच्यते, न बुद्धिः, बुद्धिप्राचुर्यस्य बुद्धिविकारत्वस्य वा बुद्धावसंभवेन तस्य तत्परत्वायोगात्। अतः प्राचुर्यार्थो मयट्, इति विज्ञानप्रचुरो जीव एव विज्ञानमयः। तस्य बुद्धिपरत्वे प्रत्ययनिरर्थकता, न्यायविरोधश्चेत्यादि—व्याख्यातम्; बुद्ध्युपाधिकस्य स्वप्नावस्थापन्नस्य जीवस्यैव विज्ञानमयपदार्थत्वम्, नतु बद्धिमात्रस्येत्येवाद्वैतिभिरपि स्वीकारेण विज्ञानमयाद् भेदनिर्देशस्यानन्दमयपरमात्मतासाधकत्वासंभवात्।

**अन्यथा—अन्नमयादिवाक्यैरपि जाग्रदाद्यवस्थापन्नजीवस्यैव विवक्षणात् ततो भेदेन निर्देशेन प्राणमयादिरपि परमात्मा स्यात्। अधिकं वेदान्तसारादौ व्यक्तम्। सति चैवमानन्दमयजीवत्वे न कोऽपि विरोधः; "भीषाऽस्माद् वातः पवते" इत्यादिसन्दर्भाणां सर्वेषां पूर्वोक्तरीत्या पुच्छब्रह्मपरत्वस्यैव स्वीकारेण कस्यापि बाधकस्यात्रासंभवात्।**

एतेन—"भीषाऽस्माद्वातः पवते" इत्यादिना वातादित्यादिजीववर्गस्य शासनीयत्वमाकाशकारणत्वादिना पूर्वप्रस्तुतस्येदंपदबोध्यस्य तच्छासकत्वं च प्रतिपाद्यते, इति शासनीयात् जीवात् शासिताऽऽनन्दमयोऽन्य एवेत्याद्यपि—व्याख्यातम्; दत्तोत्तरत्वात्।

**अयमत्र सूत्रार्थः—(आनन्दमयोऽभ्यासात्) आनन्दमयपदेनानन्दमयपर्यायो विवक्ष्यते, वाक्यानां ब्रह्मणि समन्वयनिरूपणपरेषु प्रथमाध्यायप्रथम-द्वितीय-तृतीयपादेषु पदमात्रार्थनिर्णयस्यानपेक्षत्वात्। "अन्तस्तद्धर्मोपदेशात्" "आकाशस्तल्लिङ्गात्," अत एव प्राणः," "ज्योतिश्चरणाभिधानात्," "प्राणस्तथानुगमात्" इत्यादावपि तत्तच्छब्दघटितं वाक्यमेव विषयः, पदमात्रश्रवणेन संशयाप्रसरात्। यत्र त्वानुमानिकाधिकरणादिषु पदार्थनिर्णयो विवक्षितः, तत्र पदमात्रदर्शनेन तत्तन्मताभिमतार्थवद् मतान्तराभिमतार्थान्तरप्रतीतेरविशेषात् भवति संदेहः। यथा—"महतः परमव्यक्तमि"**

त्यत्राव्यक्तपदमात्रेण साङ्ख्याभिमतप्रधानाद्वैताभिमताविद्ययोः प्रतीतिः, "अजामेकामि" त्यत्राजाशब्देनापि तयोरेव प्रतीतिः, पञ्चपञ्चजनपदेन मतद्वयाभिमतयोरर्थयोः प्रतीतिः, कर्मशब्देन पुण्य-पापादिकर्मणः, परिस्पन्दादिलक्षणकर्मणश्च प्रतीतिः, आत्मपदेन जीवात्म-परमात्मनोरुभयोरपि प्रतीतिः; प्रकृते तु नानन्दमयपद-श्रवणमात्रेण जीव-परमात्मनोरुभयोरपि प्रतीतिः, विकारार्थत्वे मयटो जीवस्यैव, प्राचुर्यार्थत्वे च प्रतीतिः, न ब्रह्मणः, इति किं जीव एव प्राधान्येन प्रतिपाद्यः, उत स एव ब्रह्माधिष्ठेयतयाऽप्रा-धान्येन प्रतिपाद्य इति जीवस्यानन्दमयपदार्थस्यैवाप्राधान्येन प्रतिपा-द्यत्वम्, उत प्राधान्येन प्रतिपाद्यत्वमित्येव भवति संशयः। तत्र प्राधान्येन प्रतिपाद्यत्वेन पूर्वपक्षः, अप्राधान्येन प्रतिपाद्यत्वे पुच्छ-ब्रह्मण एव प्राधान्यस्य विवक्षणात् सिद्धान्तः। अत्र च मीमांसका एव पूर्वपक्षिणः, जीवातिरेकेण कारणस्येश्वरस्यानङ्गीकारात्, वृत्तिकारादयः सिद्धान्तिनः। यदि प्राधान्येन प्रतिपाद्य आनन्द-मयो विवक्ष्यते, तर्हि परमात्माऽऽनन्दमय इति वादिनो वृत्तिका-रादयः पूर्वपक्षिणः, अप्राधान्येन प्रतिपाद्यत्वे तु आनन्दमयाधिष्ठा-नपुच्छब्रह्मप्राधान्यस्य विवक्षणादद्वैतिनः सिद्धान्तिनः॥

तथाच—आनन्दमयः प्राधान्येन प्रतिपाद्यः; अभ्यस्यमानान-न्दवत्त्वात्, निगमनश्लोकादिप्रतिपाद्यत्वाद्वा, इति पूर्वपक्षरीत्या सूत्रयोजना, आनन्दमयः, पुच्छब्रह्माधिष्ठेयतयाऽप्राधान्येनानन्दमय-पर्यायप्रतिपाद्यः, अभ्यस्यमानब्रह्मशब्दादिघटितवाक्यशेषाविषय-त्वात, अथवा पुच्छं ब्रह्म, प्राधान्येन प्रतिपाद्यम्; अभ्यस्यमानत्वात्; अभ्यस्यमानस्यैव हि तात्पर्यविषयत्वेन प्राधान्येन प्रतिपाद्यत्वम्, नानभ्यस्यमानस्य। आनन्दमयपर्यायवाक्यशेषेषु—'असन्नेव स भवति असद् ब्रह्मेति वेद चेत्,' 'रसो वै सः,' 'यदेष आकाश आनन्दो न स्यात्' इत्यादिषु ब्रह्मण एव समाकर्षो दृश्यते, न त्वानन्दमयपदस्य। अभ्या-

सो नामानन्यपरपुनःश्रवणमेव। यथा 'अहो रमणीया अहो रमणीया' "तत्त्वमसि तत्त्वमसी"त्यादिपुनःश्रवणम्। न ह्यत्र वाक्यशेषेषु कुत्राप्यानन्दमयस्य पुनः श्रवणम्, यत्र पुनः श्रवणम्—"आनन्दमयमात्मानमुपसंक्रामती"ति, तदपि गतिसापेक्षप्राप्तिरानन्दमयपर्यन्तस्येति सूचनार्थमेव, नतु प्राधान्येन स्वस्वरूपप्रतिपादनार्थम्। तथाचाभ्यासादिति सौत्रहेतोः स्वरसं योजनं सिद्धान्त एव भवति, न पूर्वपक्षे। तत्र हि—अभ्यस्यमानानन्दवत्त्वात् इति अभ्यासादित्यस्यैव लक्षणयाऽर्थान्तरपरत्वं स्वीक्रियते।

एतेन—अभ्यासशब्दः कर्मणि घञन्तः। आनन्दमयपदे प्रकृत्युपस्थापितत्वेन बुद्धिस्थ आनन्दो विशेष्यम्। नेतर इत्याकृष्यते। तथाचानन्दमयपदवाच्यो न जीवः, अपितु परमात्मा, वाङ्मनसागोचरत्वेनाभ्यस्यमानानन्दाश्रयत्वादिति प्रकृतसूत्रयोजनम्—परास्तम्; अभ्यासात् इति सौत्रपदस्यानन्दपदसापेक्षस्यैव हेतुसमर्पकत्वस्वीकारेण न्यायपरे सूत्रे न्यायस्यैव परिपूर्णस्याविवक्षणेन च सूत्रकाराणां न्यायनिर्देशेऽप्यनैपुण्यव्यवस्थापनेन सूत्राशयान्यथाकरणेन स्वकपोलकल्पितार्थमादाय सूत्रस्य योजनात्, स्वयमानन्दमयस्यानभ्यस्यमानत्वात्। यथाच ब्रह्मरूपस्यानन्दस्यैव "यतो वाचो निवर्तन्ते" इति द्विरभ्यासः, नतु ब्रह्मधर्मस्यानन्दस्य, तथा पूर्वमेव विवेचितम्; "उदरमन्तरं कुरुते" इत्यादीनामन्यथाऽनुपपत्तेः। तथाच वाङ्मनसागोचरत्वेनाभ्यस्यमानानन्दाश्रयत्वमप्यसिद्धमेव। नहि शतगुणितप्रजापत्यानन्दो ब्रह्मधर्म आनन्दो वाङ्मनसागोचरः; तदियत्तायाः श्रुत्यैवावधारितत्वात्।

वस्तुतस्तु—शतगुणप्रजापत्यानन्दाश्रयत्वं सगुणब्रह्मण इव जीवस्याप्यविशिष्टमेव; "श्रोत्रियस्य चाकामहतस्ये"ति प्रजापत्यानन्दात् 'शतगुणस्यानन्दस्याकामहतश्रोत्रियजीवसाधारण्यस्य तत्रैव प्रतिपादनात्। तथाच—वाङ्मनसागोचरत्वेनाभ्यस्यमानानन्दा-

श्रयत्वस्य जीवेऽपि सत्त्वेन व्यभिचरितोऽप्ययं हेतुः। एतेन—न जीव इत्यपि प्रत्युक्तम्; आनन्दमयो जीवः, वाङ्मनसागोचरत्वेनाभ्यस्यमानानन्दाश्रयत्वात्, इति सूत्रास्यानन्दमयजीवतापक्षेणापि योजनासंभवात्। तथाच विरुद्धोऽप्ययं हेतुर्भवदभिमतयोजनाविवक्षणे। यदा तु "नेतरः" इत्यनुकर्षेण काकाक्षिन्यायेन नञ्योजनया च सूत्रयोजना, तदा—आनन्दमयो न ब्रह्म, अनभ्यासात्, इति सत्प्रतिपक्षोऽपि भवति। एतेन—बाधोऽपि—व्याख्यातः; विकारस्य प्राचुर्यस्य वा मयडर्थत्वे पूर्वोक्तरीत्याऽऽनन्दमयस्य ब्रह्मत्वासंभवात्। सर्वथा तु—"आनन्दमयोऽभ्यासादि"ति सूत्रमानन्दमयाब्रह्मतायामेवानुकूलम्, नतु तद्ब्रह्मतायाम्।

"ब्रह्मविदाप्नोति परमि"ति प्रस्तुतं ब्रह्मैव हि प्राधान्येनात्र प्रतिपाद्यम्। तच्च तत्रैव वाक्ये प्राधान्येन प्रतिपाद्यम्, यत्र ब्रह्मशब्देनोपसंह्रियते। स च "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्य एव वर्तते, नत्वानन्दमयवाक्ये। वाक्यशेषा अपि ब्रह्मशब्दमुखेन रसानन्दादिशब्दमुखेनैव वा ब्रह्मस्वरूपं प्रतिपाद्यं विवृण्वन्ति, न त्वानन्दमयशब्देन, इति कथमानन्दमयः प्राधान्येन प्रतिपाद्यं ब्रह्म?

अत्र सूत्रे—आनन्दमयपक्षकः, तत्पर्यायगतपुच्छब्रह्मपक्षकश्च द्वौ न्यायौ विवक्षितौ। तत्र प्रथमन्याये "ईक्षतेर्नाशब्दम्" इत्यतो नञनुकर्षणेन—आनन्दमयो न ब्रह्म, अनभ्यासादिति योजना। द्वितीये तु पुच्छं ब्रह्मैव जिज्ञास्यम्, अभ्यस्यमानत्वाद् इति योजना, इति योजनाद्वयमावश्यकं मत्वैव ब्रह्मपुच्छमभ्यासादिति वक्तव्ये "आनन्दमयोऽभ्यासादि"ति सूत्रणम्। "अपराण्यपि सूत्राणि यथासंभवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानी"ति वदन्तः प्रथमसूत्रस्वारस्यमद्वैतमत एव, न मतान्तरे, द्वितीयसूत्रे विकारादिशब्देन कस्य ग्रहणमिति शङ्कायां पुच्छादिपदेनेत्यादि विवरणमूहनीयम्; स्फुटत्वादिति न

विवरणापेक्षेत्येव भाष्यकारा मन्यन्ते, नतु सूत्राणां प्रतीयमानार्थविरोधेनान्यार्थतया विवरणं यथासम्भवं स्वयमूहनीयं मन्यन्ते। सन्दिग्धवेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणां तत्तत्सूत्रविवरणावसरे सन्दिग्धान्येव तत्तत्सूत्रसम्बन्धयोग्यानि वाक्यानि ग्राह्याणीत्येवाभिप्रायो भाष्यकाराणाम्, नतु सूत्राशयविरोधेनापि सूत्राणामन्यथा योजनं कर्तव्यमिति।

"लोके येष्वर्थेषु यानि पदानि प्रसिद्धानि, तानि सति संभवे तदर्थान्येव सूत्रेष्ववगन्तव्यानि, नाध्याहारादिभिरेषामर्थः परिकल्पनीयः, परिभाषितव्यो वे"ति वदन्तः शबरस्वामिनोऽपि यदि प्रतीयमानार्थग्रहणमसंभवि, तर्हि प्रतीयमानार्थस्य परित्यागेनापि अध्याहारादिभिरर्थान्तरपरिकल्पनमावश्यकं मन्यन्ते। तथाचानन्दमयपदे पक्षनिर्देशकेऽन्यथानयनं मतद्वयेऽपि समानमेव; पर्यायविवक्षाया आवश्यकत्वात्। अभ्यासादितिहेतोरन्यथा नयनं तु अनावश्यकमयोग्यं च पूर्वोक्तरीत्या, इति न कुत्रापि भगवत्पादाः श्रीभाष्यकारादय इव यथेच्छमध्याहारादिना सूत्राणि योजयन्ति।

एतेन—"सूत्राणि त्वेवं व्याख्येयानि" इति वदद्भिः श्रीशङ्कराचार्यैः—"वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणामि'ति स्वोक्तिरपि स्वप्रज्ञामात्रपरिकल्पतसिद्धान्तविशेषपरिरक्षणाय विस्मृता" इत्यादि—परास्तम्; पूर्वोक्तरीत्या सूत्राणां भगवत्पादसंमतयोजनाया एव सांप्रतत्वात्।

अत्र हि प्रकरणेऽन्नमयादिपर्यायेषु श्लोकेषु अन्नादिषु ब्रह्मोपासनाविधाने तात्पर्यम्—'येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते; विज्ञानं देवाः सर्वे कर्म ज्येष्ठमुपासते' इत्यादिवाक्यैर्यथावगम्यते, न तथाऽऽनन्दमयपर्यायश्लोक आनन्दस्य ब्रह्मरूपेणोपास्यता प्रतीयते। केवलब्रह्मज्ञानमेव तु संपादनीयं प्रतीयते। यथाच मनोमयपर्यायश्लोकस्यापि मनोब्रह्मोपासनापरत्वम्, तथाऽन्यत्र व्यक्तम्। अतः कारणादवगम्यते—नानन्दमयपर्यायोऽपि पर्यायान्तरमिवोपास्यस्वरूप-

समर्पणार्थं प्रवृत्तः, किन्तु ज्ञेयस्वरूपसमर्पणार्थमेव, इति पुच्छवाक्ये प्रकरणोपसंहारकल्पनमेव युक्तम्, न त्वानन्दमयवाक्ये। अत एव भृगुवल्यामपि—"आनन्दो ब्रह्मेति व्यजानात्" इति मयट् परित्यागेनानन्दपदमात्रस्य प्रयोग उपपद्यते। अनेन चानन्दरूपेणाज्ञानं संसारनिमित्तम्, तद्रूपेण ब्रह्मणो ज्ञानमेव मुक्तिसाधनमित्यपि ज्ञाप्यते, इति प्रियशिरस्त्वादिविशिष्टानन्दमयोपासनमेव मोक्षसाधनमिति वादो निर्मूल एव। तदेवं वस्तुगतिमनुसृत्य सर्वेषां पर्यायाणां पुच्छवद्विषयकत्वनियमो व्याहत इति प्रतिपादितम्।

अस्तु वा पर्यायाणां केषांचन पुच्छवद्विषयकत्वं तुष्यतुदुर्जनन्यायेन, तथापि नेदं नियतम्, किंत्वौत्सर्गिकमात्रम्; मनोमयपर्यायस्य पुच्छवद्विषयकत्वात्। नहि अत्र मनसो ब्रह्मज्ञानसाधनत्वेन स्तूयमानस्य ब्रह्मरूपेणोपदेशोऽपि प्राणादिविज्ञानानामिव दृश्यते, इति निगमश्लोकस्यावयविप्रकृत्यर्थब्रह्मोपासनापरत्वनियमो मनोमयपर्याये व्यभिचरत्येव।

एतेन—मनोमयपर्यायश्लोकस्यापि साक्षादेव पुच्छवद्विषयकत्वसत्त्वेन तादृशनियमोपपत्तिरिति—परास्तम्; यथाकथंचिन्मनोमयपरामर्शमात्रविविक्षायां तु—"असन्नेव स भवति" इति निगमनश्लोकेऽपि स इति तच्छब्देनानन्दमयपरामर्शसंभवात् साक्षात् पुच्छवद्विषयकत्वमानन्दमयपर्याय एव संभवति, न पर्यायान्तरेषु; तेषां कारणपरामर्शविधयैव पुच्छवद्विषयकत्वेन साक्षात् पुच्छवद्विषयकत्वादर्शनात्। यथाच मनोमयपर्याये—"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहे"ति पूर्वभागेन मनसो ब्रह्मण्यप्रवृत्तिप्रतिपादनेन निन्दायामपि—'विद्वानि'त्यनेन विशुद्धेन मनसेतिपदाध्याहारेण मनसः प्रशंसोत्तरवाक्येनावगम्यते, एवमानन्दमयपर्यायश्लोकेऽपि "असन्नेव स. भवति" इति पूर्वभागेनानन्दमयस्य निन्दायामपि

"सन्तमेनं ततो विदुरि" ति पाश्चात्यभागेनानन्दमयस्यैव साक्षात् प्रशंसाऽवगम्यते, इति सर्वात्मना साम्यं मनोमयपर्यायश्लोकेनानन्दमयपर्यायश्लोकस्य ।

एतेन—तच्छब्देनानन्दमयपरामर्शाभ्युगमेऽपि न तस्यैवं विधं प्रतिपाद्यत्वम् ; "असन्नेव स भवती" ति तस्य निन्दाया एव प्रतीतेः, उपक्रमे निन्दाप्रतीत्या "सन्तमेनं ततो विदुरि" ति प्रशंसाया अकिञ्चित्करत्वादित्यादि—परास्तम् ; मनोमयपर्यायश्लोकस्यापि पूर्वोक्तप्रकारेणोपक्रमे मनोनिन्दापूर्वकं प्रवृत्तस्य मनोमयप्रशंसापरत्वानापत्त्या तत्पर्यायश्लोकस्यापि पुच्छवद्विषयकत्वासंभवात् श्लोकस्य पुच्छवद्विषयकत्वं हि न नियतम् ; मनोमये व्यभिचारात् । तथाच मनोमयपर्यायश्लोको यदि मनोमयप्रशंसापर्यवसानेन पुच्छवद्विषयकः, तर्ह्यानन्दमयश्लोकोऽपि तादृश इति न कोऽपि विशेषः ।

एतेन—आनन्दमयप्रशंसाया असिद्धतया विज्ञानमयपरामर्शित्वमेव तच्छब्दस्य, नानन्दमयपरामर्शित्वम् ; विज्ञानमयस्य पापप्रहाणपूर्वकसर्वकामावाप्तिरूपमोक्षफलसाधनवेदनविषयताश्रवणाच्च जीवपरताया अविचाल्यत्वादिति शङ्कापि—परास्ता; पूर्वप्रस्तुतानन्दमयपरामर्शित्वे संभवति व्यवहितविज्ञानमयपरामर्शित्वासंभवात् , चेच्छब्दघटितावान्तरवाक्ये श्रुतस्यैव कर्तुर्मुख्यवाक्यार्थेऽन्वयस्य रामो लङ्कां तरति चेत् , रावणं हनिष्यतीत्यादौ दर्शनेन प्रथमस्यैव तच्छब्दस्योपरितनवाक्येऽप्यन्वयसंभवाद् नात्र क्लिष्टकल्पनापि । इयमेव गतिरानन्दमयब्रह्मतावादिमतेऽपि, यत्र स इत्यनेन विज्ञानमयस्यैव परामर्शः, तत्राप्यवलम्बनीया । तथाच निगमनश्लोकस्य पुच्छब्रह्मवादेऽपि पुच्छवदवयविविषयत्वं न दुर्लभम् ।

तदेवमानन्दमयस्यैव श्लोकविषयत्वमभ्युपगम्य पुच्छब्रह्मवादः प्रतिष्ठापितः । वस्तुतस्तु—नानन्दमयस्य पूर्वोक्तरीत्या श्लोक-

प्रतिपाद्यत्वम् ; पुच्छब्रह्मण एव तत्त्वात् । तथाच श्लोकाप्रतिपाद्यत्वात् नानन्दमयप्राधान्यमपि संभवति; अवयवस्य पक्षशिरआदेः तदप्रतिपाद्यस्याप्रधानत्वात् ।

एतेन—यथाकथंचिदवयविस्तुतिपर्यवसाय्यवयवविषयत्वमेव श्लोकानां नियतम्, नत्ववयविवाचकशब्दघटितत्वमिति वादोऽपि—परास्तः ; अन्नमयादिश्लोकानां केषामप्यवयविस्तुतिपर्यवसाय्यवयवविषयत्वाभावेन व्यभिचारात् , न ह्यन्न-प्राण-मनो-विज्ञानानामन्नमयाद्यवयवत्वं संभवति ; अन्नादीमन्नमयादिशिरःपक्षादिरूपत्वाभावात् । तथाचानन्दमयस्य कथमपि श्लोकप्रतिपाद्यत्वाभावाद् न प्रधानत्वम् । यदि सम्बन्धिस्तुतेः सम्बन्ध्यन्तरस्तुतौ पर्यवसानात् "आपो वै शान्ताः" इति वाक्यस्येवान्नादिस्तुतेरन्नमयादिस्तुतौ पर्यवसानमिति मन्यते, तर्हि ब्रह्मण्यध्यस्तत्वेनानन्दमयस्तुतिरपि न दुष्टा; परंतु कार्य-कारणयोरारोप्याधिष्ठानयोर्वा कारणाधिष्ठानयोरेव प्राधान्यात् पुच्छब्रह्मप्राधान्येनैव श्लोकपर्यवसानमूरीकर्तव्यम्, नत्वानन्दमयप्राधान्येन । तथाचानन्दमयस्य ब्रह्मकार्यस्याब्रह्मत्वाद् ब्रह्मविद्यायाः प्रक्रान्ताया नानन्दमये पर्यवासनम् , इति नानन्दमयस्य श्लोकप्रतिपाद्यत्वम् । अन्नमयादौ तु ब्रह्मविद्याया अपर्यवसानाद् अवान्तरतात्पर्यमादायावान्तरप्राधान्यस्यैव विवक्षणीयत्वात् तत्पर्यायश्लोकानामवान्तरतात्पर्यविधया तत्प्रतिपादकत्वादवान्तरप्राधान्येऽपि न दोषः । तथाच—आनन्दमयस्य मुख्यप्राधान्याभावे श्लोकमुख्यतात्पर्यविषयत्वाभावस्यैव हेतुतयाऽत्र विवक्षणाद् मनोमयादौ हेतु-साध्ययोरुभयोरप्यभावेन न मनोमयादौ व्यभिचारशङ्का ।

एतेन—पूर्वोत्तरसन्दर्भाणां स्तुत्यत्वेन प्रधानानन्दविषयकत्वस्यैवाकामेनाप्यङ्गीकार्यतया त्वदभिमतपुच्छब्रह्मविषयताया दत्ततिलाञ्जलित्वप्रसङ्ग इति—परास्तम्; पुच्छब्रह्मण आनन्दमयावयवत्वा-

भावेनावयविस्तुतिपर्यवसाय्यवयवविषयत्वस्य बाधात्। न ह्यन्नमयादिस्थलेऽन्नमयादेरेवावयवित्वमवयवत्वमुभयं च दृश्यते, इत्येकस्यैव शाब्दमवयवित्वमवयवत्वं चानन्दमयपर्यायमात्रे गत्यन्तरसम्भवेऽनुपपन्नमेव; अन्यथा ब्रह्मण एव प्राधान्यमप्राधान्यं चोभयं स्यादिति विरोधः। एतेन—आनन्दमयस्येव पुच्छब्रह्मणोऽपि स्वप्रधानत्वमिष्टमेवास्माकम्, परन्तु सा प्राधान्यप्रतीतिर्ब्रह्मस्वभावपरामर्शमूलाऽऽर्थीति वादोऽपि—पराहत; ज्ञानमात्रप्रामाण्यवादिनां भवतां कल्पितावयवत्वस्यापि वास्तवत्वेन वास्तवावयवत्वस्य वास्तवप्राधान्यविरोधित्वस्यैवापातेनैकस्यैवावयवत्वस्यावयवित्वत्वस्य चासम्भवात्। तथाचोक्ताविरोधार्थमानन्दपर्याये पुच्छपदेनाधारलक्षणैव स्वीकर्तव्या, आधारपदे प्रयोक्तव्ये पुच्छपदप्रयोगस्तु शब्दतः पर्यायान्तरसारूप्यार्थम्, अर्थस्वभावपरामर्शमूलब्रह्मप्राधान्यं तु भवतामप्यभिमतमेव। तथाचोभयाभ्युपेतपुच्छब्रह्मप्राधान्यमात्रेण निर्वाह आनन्दमयस्यापि प्राधान्यकल्पनमनावश्यकमेव; तस्य जीवत्वेऽपि सन्दर्भशुद्धिसम्भवात्। नच विनिगमनाविरहः; आनन्दमय इति मयट एव तज्जीवतानियामकत्वात्। एतेन—ब्रह्मपदवदानन्दमयपदस्यापि श्रुतित्वेन तयैव तस्यापि प्राधान्यसिद्धिरिति शङ्कापि—प्रत्यस्ता; ब्रह्मपदानन्दमयपदयोरपर्यायत्वात्, "तस्यैष एव शारीर आत्मा" इत्यानन्दमयस्याप्यात्मान्तरस्यात्रोपदेशेनानन्दमयस्याब्रह्मत्वाच्च ॥

इदं पुच्छपदस्याधारलक्षकत्वावधारणम्—"विकारशब्दादिति चेत्, न प्राचुर्यादि"ति सूत्राधीनमेव। अयमत्राद्वैत्यभिमतः सूत्रार्थः—पुच्छवाक्यं प्राधान्येन न ब्रह्मपरम्, ब्रह्मणोऽप्राधान्योपपादकावयववाचिपुच्छशब्दवत्वात्, इति चेत्, न; पुच्छपदस्य पर्यायान्तरेषु सर्वत्र दर्शनेनात्रापि पर्यायान्तर इव तत्पदप्रयोगेऽपि तस्याधारलक्षकत्वेनावयवाबोधकत्वात्। अत्र प्राचुर्यादित्यनेन

पुच्छशब्दप्राचुर्यरूपप्रायपाठो विवक्ष्यते। पुच्छशब्दादिति वक्तव्ये विकारशब्दादितिपदेन पुच्छपदं तस्य नैरर्थक्यं च व्युत्पत्तिभेदेन विवक्षित्वा पुच्छशब्दानर्थक्यापत्तिरूपार्थबोधनार्थमेवेत्याद्यन्यत्र व्यक्तम् ॥

एतेन—विकारवाचिमयट्शब्दाद् नानन्दमयः परमात्मेति चेत्, न; प्राचुर्यात्, मयडर्थस्यात्र प्राचुर्यस्यैव विवक्षणादानन्दप्रचुरं ब्रह्मैवानन्दमय इति सूत्रयोजना—परास्ता; आनन्दप्राचुर्यविवक्षायामप्यानन्दमयापरमात्मतायाः पूर्वमुपपादितत्वात् तत्प्राचुर्यस्य सिद्धान्ताहेतुत्वात्, प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वाच्च ॥

सत्यं प्राचुर्यस्य स्वव्यधिकरणविजातीयाल्पतानिरूपकत्वमपि प्रचुरप्रकाशः सवितेत्यादौ दृष्टम्, तथाप्यानन्दमये तु स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमेव स्वीकर्तव्यम्; प्रिय-मोदानन्दादिभिन्नजातीयानन्दविशेषवत आनन्दमयस्यापरिच्छिन्नानन्दवत्त्वाभावेन तत्र स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वस्यैव विवक्षणीयत्वात्, प्रतिशरीरं प्रियादिभेदेन निरतिशयस्य प्रियादिपदार्थस्यैवासम्भवदुक्तिकत्वात्, ब्रह्मणो हि नित्यसुखस्याप्तकामस्येष्टानिष्टविभागरहितस्येष्टवस्तुदर्शनजन्यसुखस्य तल्लाभजन्यसुखान्तरस्य चासम्भवः। तथाच स्मृतिः—"नच द्वेष्यो नच प्रियः" इति। "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति तु विदुषो ब्रह्मणश्च स्वरूपाभेदाभिप्रायम्; "ज्ञानी त्वात्मैव मे मतम्" इति वाक्यशेषात् ॥

अत एव—"स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्ये"ति हिरण्यगर्भानन्दपर्यन्त आनन्दो जीवानन्द एवेति बोध्यते।

अत्र हि ब्रह्मपदेनानन्दमयो विवक्ष्यत इति तु मतद्वयसम्प्र-

तिपन्नम्। इयान् विशेषः—यदद्वैतमते कार्यं ब्रह्म जीवकोटिप्रविष्ट आदिजीवो हिरण्यगर्भः; "हिरण्यगर्भः समवर्तताग्रे" इत्यादिवचनात्। यतो हि—"आनन्दमयमात्मानमुपसंक्रामति" इति गतिप्राप्यत्वमानन्दमयस्य प्रतिपादितम्। यथाच गतिप्राप्यत्वं कार्यब्रह्मण एव, नतु परस्य ब्रह्मणः; तथा—"कार्यं बादरिरस्य गत्युपपत्तेरि"ति सूत्रे व्यक्तम्। परब्रह्मणोऽपि गतिप्राप्यत्वे हि कार्यविवक्षायामेव गत्युपपत्तिर्न हेतुर्भवितुमर्हति। यथाच कार्याधिकरणे बादरिपक्ष एव सूत्रस्वरस्येन सिद्धान्तपक्षः, न जैमिनिपक्षः, नवा—"प्रतीकालम्बनान् नयतीति बादरायणः" इत्यस्य सूत्रस्य "स एनान्" इत्यत्रैनान्पदार्थव्यवस्थापकस्य तद्वाक्यघटकब्रह्मपदार्थनिरूपणपरात् कार्याधिकरणात् पृथगधिकरणत्वम्; विषयभेदात्, नतु कार्याधिकरणगुणसूत्रत्वं श्रीभाष्याभिमतम्, तथाऽस्मदीयाद्वैतमार्तण्डे व्यक्तम्; अन्यथा आनन्दमयशब्देन ब्रह्मण एव विवक्षणे शतगुणोत्तरानन्दमीमांसायां प्रतिमीमांसमकामहतश्रोत्रियस्यापि निर्देशोऽनुपपन्नः स्यात्। अनेन ज्ञाप्यते—प्रचुरानन्दविवक्षायामपि जीव एवानन्दमय इति। यतश्चक्रवर्तिनमारभ्य हिरण्यगर्भपर्यन्तस्य सर्वस्य प्रचुरानन्दस्य यादृशं प्राचुर्यम्, तादृशमकामहतश्रोत्रियाख्यस्य प्रसिद्धस्य जीवस्यापि वर्तत एव। तथाच न केवलं सुषुप्त्यवस्थामेवादाय जीवस्यानन्दमयत्वं व्यवस्थापनीयम्, किन्त्वकामहतत्वे जाग्रदाद्यवस्थायामपीति बोधनार्थमेवानन्दमीमांसा प्रस्तुता। तथाच केवलानन्दरूपं यद् ब्रह्म, न तदानन्दप्रचुरम्; वाङ्मनसगोचरत्वात्, किन्तु स्वल्पदुःखो जीव एवानन्दमयः, न ब्रह्मेति प्रकृतसन्दर्भशुद्धिरपि व्याख्याता॥

एतेन—ब्रह्मगतानन्दप्राचुर्यं जीवगतानन्दाल्पत्वप्रत्यायकमित्येवाश्रयितुं युक्तम्; श्राव्यते च तत्प्रकरणेऽपि—"ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः" इति। अतः प्रकरणोक्तमानन्दप्राचुर्यनिरूपकमु-

पक्ष्याश्रुत-प्रमाणविरुद्ध-स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वम-नुपपन्नं न प्रमाणशरणहृदयङ्गममिति शङ्कापि—परास्ता ; वस्तुस्वभावस्य, प्रमाणान्तरानुगुण्यस्य प्रकरणपरिशुद्धेश्चानन्दमयजीवतायामेवानुकूलत्व-स्यासकृदावेदितत्वात् ॥

प्राणमय-मनोमय-विज्ञानमयपदेषु हि न स्वव्यधिकरण-सजातीयाल्पतानिरूपकत्वं दृष्टम्, जीवादन्यत्र ज्ञानाद्यल्पत्वस्य वक्तुमशक्यत्वात्, इति स्वसमानाधिकरणविजातीयाल्पतानिरूप-कत्वमेवात्र प्रकरणे सर्वत्र दृष्टम्, इति प्राथम्यरूपप्रमाणान्तरानुगु-ण्यमानन्दमयजीवतापक्ष एव, न तत्परमात्मतापक्षे। एतेन—वस्तु-स्वभावोऽपि व्याख्यातः, आनन्दमयाजीवतायां दुःखल्पत्वावगम-स्यैव स्वाभाविकत्वात्। यथाच प्रकरणं पुच्छब्रह्मब्रह्मतायामेवानु-कूलम्, न त्वानन्दमयब्रह्मतायाम्, तथा पूर्वमेव निरूपितम्।

एतेन—प्रकरणादानन्दमयस्य ब्रह्मत्वनिश्चये साहचर्येण तस्मिन् दुःखोपपादनायोग इति—अपास्तम्; दत्तोत्तरत्वात्। ज्ञेयब्रह्म-प्रकरणं हि ब्रह्मवल्ली, न तूपास्यब्रह्मप्रकरणम्। अत एव—"उताऽवि-द्वानमुं लोकं प्रेत्य कश्चन गच्छती" इत्यविद्वद्विषये गतिप्रश्नः, "आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता उ" इति विद्व-द्विषये समशनप्रश्नश्चोपपद्यते। अत्र विदुषः सर्वकामानुभवितृत्व-मुत्क्रान्तिसापेक्षं न वेति प्रश्नेन विद्वद्विषये गतिनिरपेक्षं ब्रह्मता-दात्म्यमेव—"ब्रह्मणा समश्नुते" इत्यत्र विवक्षितं वा, उत ब्रह्म-सहभाव एव गतिसापेक्षो विवक्षणीय इति प्रश्नान्तरमेव मुख्यं विवक्ष्यते। अत एव—"सोऽकामयते" ति ब्रह्मणः सर्वतादात्म्यो-पपादनेनोत्तरग्रन्थः प्रवर्तते; अन्यथा गतिप्रश्नसमाधानं "सोऽक-मयते" त्यादिसन्दर्भेण कथं सिद्ध्येत्? तथाचानन्दमयपर्यन्तमुप-संक्रमितव्यम् विद्वद्विषयगतिप्रश्नसमाधानव्याजेनोक्त्वा "यतो वाचो निवर्तन्ते" इति विद्वद्गतिविषये मौनमेव वरमुत्तरम्;

तस्य गतेरसंभवात्। सर्वतादात्म्येन हि विदुषो भावः, नतु सर्वोपभोक्तृत्वमित्येव ब्रह्मवल्ली भृगुवल्ली च मन्यते।

अनेन च—"अत्र ब्रह्म समश्नुते न तस्य प्राणा उत्क्रामन्ती" ति श्रुत्यन्तरैकवाक्यताऽपि "ब्रह्मणा विपश्चिते" त्यत्र ब्रह्मतादात्म्यविवक्षायामेव भवति, नान्यथेत्यपि ज्ञाप्यते। अयं चार्थो ब्रह्ममीमांसायामपि—"प्रतिषेधादिति चेत्, न" "स्पष्टो ह्येकेषाम्" इत्यत्र विस्तरेणालोचितः। यथा चेदमप्यधिकरणं श्रीभाष्यकारैरन्यथा नीयमानं बहुतरसूत्रविरुद्धम्, तथाऽद्वैतमार्तण्डेऽस्मदीये निपुणतरमुपपादितम्। तथाच स्पष्टमिदमवगम्यते—यद् ब्रह्मवल्ली भृगुवल्ली च निर्विशेषमेव ब्रह्म प्रतिपादयति, नतु सविशेषं ब्रह्मेति, कथं वा प्रकरणादानन्दप्रचुरं सविशेषं ब्रह्मैव प्राधान्येन प्रतिपाद्यं ज्ञेयतया प्राप्यतया च विवक्षितम्?

अत एवा"नन्दो ब्रह्मेति व्यजानादि"त्यानन्दस्वरूपमेव ब्रह्मेति प्रतिपादितमुपपद्यते। मतान्तरे हि--"आनन्दं ब्रह्मेति व्यजानादि" त्येव पाठः स्यात्, यद्यानन्दप्रचुरं ब्रह्मेति धर्म-धर्मिभावो विवक्षितः स्यात्। तथाचानन्दप्रातिपदिकमात्रस्य सर्वत्राभ्यासोऽप्युपपद्यते। न ह्यानन्दानन्दमयपदयोरेकार्थत्वं संभवति; आनन्दमयपदस्य धर्मिपरत्वात्, आनन्दशब्दस्य च धर्मपरत्वात्; अन्यथा—"आनन्दो ब्रह्मेति व्यजानादि" त्यत्रापि पुंलिङ्गनिर्देशोऽनुपपन्न एव स्यात्। "ब्रह्मण आनन्दमि"ति तु "राहोः शिर इतिवदभेदेऽपि न विरुद्धम्। तद्गुणसारत्वात् तद्व्यपदेशस्तु गौण एव, न मुख्यः; गौणमुख्ययोर्हि मुख्ये कार्यसंप्रत्ययः, इति मुख्यार्थबाधायोगः॥

तथाचानन्दमयशब्दस्य पूर्वोक्तरीत्या विकारार्थत्वस्यैव युक्तत्वात् प्राचुर्यार्थत्वेऽपि "आनन्दमयमुपसंक्रामती"ति गतिप्राप्यत्वस्य बोधनेन प्राचुर्यस्य प्रकृते दुःखाल्पतानिरूपकत्वस्यावश्यकत्वेन च जीवपरत्वस्यैवोचितत्वेन नानन्दमयब्रह्मादिपदानां पर्यायत्वम्। "ब्रह्म-

विदाप्नोति परमि'' ति केवलब्रह्मपदेनोपक्रमः, "ब्रह्म पुच्छं प्रतिष्ठे'' ति तेनैवोपसंहारः, तदर्थतयैव चान्नमयादिवाक्यानां प्रवृत्तिः । सन्ति चवं जतिलादिवाक्यस्येवोत्तरवाक्येन बाधे पूर्ववाक्यस्य ग्राह्यसमर्पकत्वायोगेनान्नमयादीनामिवानन्दमयस्यापि "तस्यैष. एव शारीर आत्मे'' ति वाक्येनार्थतो निषेध्यतयाऽवगतस्य न ग्राह्यत्वमित्येवावगन्तव्यम् ।

एतेन—रसानन्दानन्दमयादिपदानामेकार्थत्वम् । इत्थं च—धर्मिपर्यन्तबोधकानन्दमयघटितोपक्रमानुसारेण मध्यपतितमानन्दपदं तत्समानार्थकं रसपदं चानन्दवत्परमिति युक्तमिति—अपास्तम् ।

"सत्यं ज्ञानमनन्तं ब्रह्मे'' त्युपक्रमस्य "ब्रह्म पुच्छमि''त्युपसंहारस्य च निर्विशेषपरत्वेनोपक्रमोपसंहारयोर्धर्मिपर्यन्ताविषयत्वात्, विना मयडन्तं भृगुवल्याम्—"अन्नं ब्रह्मेति व्यजानात्'' "प्राणो ब्रह्मेति व्यजानात्'' मनो ब्रह्मेति व्यजानात्,'' आनन्दो ब्रह्मेति व्यजानात्'' इति स्वरूपबोधकपदेनैवोपक्रमोपसंहारयोः प्रवृत्तत्वात् । अन्नमयादीनां मयडन्तेनोपक्रान्तानाममुख्यात्मपरत्वस्यैव दर्शनेनान्नमयाद्यानन्दमयान्तोपक्रमोपसंहारयोर्मयडन्तपदेन प्रवृत्तयोरमुख्यात्मविषयत्वस्यैव युक्तत्वेनाङ्गानुरोधन प्रधाननयनस्यायुक्तत्वेन चानन्द-रसादिपदानां धर्मिपरत्वायोगात् ॥

एतेन—अपृथक्सिद्धविशेषणवाचकानां पदानां विशेष्यपर्यन्तत्वबोधकताया लोक-वेदसिद्धत्वेन तन्न्यायेनानन्दादिपदानां तद्वत्परत्वमिति—अपास्तम् ।

"गुणिलिङ्गास्तु तद्वति'' इति न्यायेन विशेष्यलिङ्गत्वं विना विशेष्यपर्यन्तबोधकताया असम्भवात् "आनन्दो ब्रह्मेति व्यजानादि''त्यत्रानन्दमयपरत्वासम्भवात् । अन्यथा रूपं घट इति प्रयोगोऽपि हि साधुः स्यात् । एतेन—"स यो मनुष्याणां राद्धः समृद्धः,..संपन्नतमः स मनुष्याणां परम आनन्दः''इति श्रुतिरपि

व्याख्याता; तस्य मुक्तात्मपरत्वेनानन्दरूपताबोधन एव तात्पर्यात्। न ह्यत्राप्यानन्दशब्देनानन्दमय एव ग्रहीतव्य इति संभवति। तथाच कुत्राप्यानन्दवत्यानन्दशब्दप्रयोगस्यासंभवाद् रसानन्दादिपदानां नानन्दमयपर्यायत्वं संभवति। नहि ब्रह्मानन्द एकरूपे प्रियमोदादिविभागोऽपि संभवति; वृत्तितारतम्येन प्रतिबिम्बानन्दानां जीवगतानामेव भेदसंभवात्, ब्रह्मानन्दस्य बिम्बरूपस्य भेदकप्रमाणाभावात्।

एतेन—प्रकरणस्य निर्विशेषविषयता शपथैकनिर्णेया; उपक्रमप्रभृत्युपसंहारान्तं बहुविधविशेषाणां तत्र प्रतीतेः, बृहत्त्वोपास्यत्वप्राप्यत्व-सत्यत्व-ज्ञानत्व-हृदयगुहानिहितत्व-परमव्योमनिलयत्वसर्वकामवत्त्व-विपश्चित्त्वात्मत्वाकाशकारणत्वान्न-प्राण-मनो-विज्ञानान्तरत्व-निरतिशयानन्दवत्त्वादयो हि धर्माः स्फुटतरमुपलभ्यन्त इति—परास्तम्।

निर्विशेषत्वं हि ब्रह्मणः परमार्थतो विशेषराहित्यमेव, न विशेषसामान्यराहित्यम्; कल्पितविशेषवत्तायाः पारमार्थिकविशेषराहित्याविरोधित्वात्। बृहत्त्वादयस्तु सर्वेऽपि धर्मा व्यवहारार्थे कल्पिता व्यावहारिका एव, न पारमार्थिकाः। ब्रह्मणो बृहत्त्वं नित्य-शुद्ध-बुद्ध-निरतिशयस्वरूपत्वमेव, नतु कश्चन धर्मविशेषः। उपास्यत्वं तु ब्रह्मणो नात्र प्रकरणे विवक्ष्यते; ज्ञेयत्वस्यैवात्र विवक्षणात्। वेद्यत्वं तु ब्रह्मणो वृत्तिव्याप्यत्वं यावद्वृत्तिकालमवतिष्ठमानं कल्पितमेव; वृत्तिनाशानन्तरं स्वतः प्रकाशमानचैतन्यस्वरूपमात्रस्यैव प्रकाशात्, तादृशचैतन्यमात्रस्यैव मुख्यब्रह्मपदार्थत्वाच्च। प्राप्यत्वं तु ब्रह्मणोऽज्ञानहानमित्यादि पूर्वमेव विवेचितम्। सत्यत्वं हि त्रिकालबाध्यत्वाभावत्वोपलक्षितं ब्रह्मस्वरूपमेव। एतेन—चिद्रूपत्वमपि—व्याख्यातम्; स्वप्रकाशानावृतचैतन्यस्यैव ज्ञानरूपत्वात्। हृदयगुहानिहितत्वं हि ब्रह्मणो नात्र प्रकरणे निर्दिष्टम्; "यो वेद निहितं

गुहायामि''त्यत्र तु गुहानिहितजीवात्माभेद एव ब्रह्मणः प्रतिपाद्यते। इदं च निर्विशेषवादस्यैवानुकूलम्, नतु सविशेषब्रह्मवादस्य। एतेन—देहाद्यन्तरत्वादिकमपि—व्याख्यातम्; तस्यापि जीवाभेदनिरूपणार्थत्वात्। परमव्योमनिलयत्वं हि गुहानिहितत्वापेक्षया नातिरिक्तो धर्मः। विपश्चित्त्वं तु सर्वज्ञत्वं ब्रह्मणोऽभिन्ननिमित्तोपादानत्वव्यवस्थापनविधया सर्वतादात्म्ययोग्यत्वव्यवस्थापनार्थं कल्पितमेव। अन्यथा--'ब्रह्मणे'ति सहयोगतृतीयैव, नाभेदे तृतीयेति स्यात्। तथाचेदमत्र सूच्यते—यद् ब्रह्मणेति सहयोगतृतीयाविवक्षणे विपश्चितापदवैयर्थ्यापत्तिः; तद्विशेषणस्य तन्मते व्यर्थत्वात्, अत एव—तदनन्तरमेव—"तस्माद्वा एतस्मात" इति कारणवाक्यप्रवृत्तिरुपपद्यते। एतेन--आकाशादिकारणत्वमपि--व्याख्यातम्; तस्य तदुपादानत्वरूपस्य निर्विशेषवादव्यवस्थापनार्थत्वात्। नहि श्रीभाष्यमते—ब्रह्म स्वत उपादानकारणं स्वीक्रियते। निरतिशयानन्दवत्त्वं तु नात्र प्रकरणे ब्रह्मधर्मतया प्रतिपाद्यते; आनन्दमयपदस्य निर्विशेषवादिभिर्जीवपरत्वस्यैव स्वीकारेण ब्रह्मपरत्वानङ्गीकारात्, प्रिय-मोदानन्द-ब्रह्मणां ब्रह्मण्यसंभवेन, अभ्यासरूपहेतोरानन्दमयाविषयत्वेनानन्दमयब्रह्मताऽसाधकत्वेन, प्रकरणस्याप्यानन्दमयाविषयत्वेन श्रुति-सूत्रस्वारस्यस्यानन्दमयब्रह्मतावादेऽसंभवाच्च।

> एतेन—अभ्यासपदस्य यत्नान्तत्वमाश्रित्य आनन्दमयः, परं ब्रह्म, निरतिशयदशाशिरस्कत्वेनाभ्यस्यमानानन्दवत्त्वादिति सूत्रार्थ एव युक्ततरः; बहिर्भूताभ्यासस्य हेतुत्वाश्रयणापेक्षया निरतिशयदशाशिरस्काभ्यासस्य हेतुत्वाङ्गीकारस्यात्यन्तोचितत्वादित्यादि—परास्तम्।

सौत्राभ्यासपदस्यानन्दपदाध्याहारसापेक्षविवरणस्यास्य सूत्राशयासंस्पर्शित्वात्। तात्पर्यलिङ्गं ह्यभ्यासमात्रमेव, नत्वभ्यस्यमानधर्माश्रयत्वम्। यथाच निरतिशयदशाशिरस्कानन्दाश्रयत्वं

वाङ्मनसागोचरानन्दवत्त्वं वा नानन्दमयस्य, किन्तु पुच्छब्रह्मण एव, तथा पूर्वमेवोपपादितम् ॥

वस्तुतस्तु—आनन्दमयब्रह्मतासाधकहेतावभ्यस्यमानपदं व्यर्थम्; वाङ्मनसागोचरानन्दवत्त्वमात्रस्य यदि संभवः। तथाच सौत्रस्याभ्यासपदस्यैवाञ्जलिप्रदानमापद्यते, इति सौत्राभ्यासपदसार्थक्यार्थमपि नानन्दमयब्रह्मतावादो युक्तः। स्पष्टं चैतदाकरे आनन्दवल्ल्याम्— "एतमानन्दमयमात्मानमुपसंक्रामती"त्यंशव्याख्यावसरे विशदीकृतम्। आनन्दमीमांसासमाप्तिर्हि "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति वाक्येन क्रियमाणा "असावादित्यो ब्रह्मे"ति महावाक्यार्थब्रह्मरूपानन्द एव मीमांस्य आनन्दः, नतु हिरण्यगर्भान्तानन्द इयत्तापरिच्छिन्नो वाङ्मनसगोचरो वेति ज्ञापयति। सति चैवं "स य एवंवित्" इत्यत्रापि "सत्यं ज्ञानमि"ति प्रस्तुतं ब्रह्म न केवलं गुहानिहिताभिन्नम्, किन्तु सूर्यान्तर्याम्यपीति ज्ञापनेन आनन्दमयशब्देनाधिदेवं जीवस्वरूपमपि विवक्ष्यते, इति सूचनाद् अधिदैवं परमकाष्ठापन्नो हिरण्यगर्भोऽपि जीवकोटिप्रविष्ट आनन्दमय एव, परमात्मा तु सर्वाधिष्ठानं शुद्धमानन्दरूपं ब्रह्मैवेति सिद्ध्यति ॥

एतेन—भवद्रीत्या पूर्वं परमानन्दस्य निर्देशाभावेन यत्पदेन परामर्शायोगः। "ब्रह्मण आनन्दः" इत्यत्र हि—ब्रह्मपदं भवन्मते हिरण्यगर्भपरमेव, आनन्दपदं च परमानन्दमात्राभूतानन्दपरम्। अस्य हिरण्यगर्भानन्दत्वे "सैषानन्दस्ये"त्यानन्दपदमपि न भवत्पक्षे परमानन्दपरं भवितुमर्हति, आदित्यग्रहणस्य सर्वात्मनाऽसङ्गतत्वाच्चेत्यादि—परास्तम्।

आ॰ मीमांसाया हि न "स एको ब्रह्मणः" इत्यत्र समाप्तिः, किन्तु—" यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यत्रैवेति "सैषानन्दस्य" त्यत्र प्रस्तुत आनन्द एव जीवसूर्योभयान्तर्यामिब्रह्मरूपतया विव[illegible]ते, इति न परमानन्दस्यात्र परामर्शायोगः। अत्र

पुरुषे सूर्ये चानन्द एकरूपो न सातिशय इति बोधनाद् हिरण्यगर्भान्तानन्दस्यैव तत्तदुपाधितारतम्यप्रयुक्तोत्कर्षापकर्षाभावः संभवतीति कृत्वैव—"स एकः" इत्यनेन तस्योत्कर्षापकर्षापोहार्थत्वमाकरे व्यवस्थापितम्।

एतेन—"अस्माल्लोकादि"त्यत्र लोकपदमपि दृष्टादृष्टविषयसमुदायपरमेव, न प्रकृतिमण्डलपरम्; प्रकृतिमण्डलस्यापि दृष्टादृष्टसमुदायरूपत्वेनानर्थान्तरत्वात्। प्रेत्यपदेन लोकान्तरावाप्तिविवक्षा तु मतान्तररीत्याऽयुक्तैव; अन्नमयशरीरप्राप्तेर्लोकान्तरप्राप्तिनिरपेक्षत्वात्। एतेनोपसंक्रामतिपदमपि ज्ञानमात्रपरम्, ननु प्राप्तिपरमिति व्याख्यातम्; गत्यर्थानां ज्ञानार्थकत्वेन क्लेशलेशस्याप्यभावात्। विषयसमुदायान्निरपेक्षो भूत्वाऽन्नमयमनुख्यात्मानं जानातीत्युक्ते प्रस्तुतत्वाद् विषयसमुदायमन्नमयात्मना जानातीत्यर्थसिद्धम्, इति न विषयजातमित्यस्याध्याहारोऽप्यत्र विवरणे। एतेन—उपसंक्रमणकर्ताऽपि परमात्मैव, न जीव इति—व्याख्यातम्; "स एकः" इत्यैकात्म्यवादस्य श्रुतिसिद्धत्वेनान्यस्यान्यात्मना ज्ञानवर्णनासम्भवात्।

एतेन—प्रकरणविरुद्धमात्मैकत्वकथनमिति—प्रत्युक्तम्; प्रकरणस्यापि गुहानिहताभिन्नतया ब्रह्मोपक्रमात् "स एकः"इत्युपसंहाराच्चात्मैक्यपरत्वेनातद्भेदपरत्वात्। अत एव "तदनुप्रविश्ये"ति परमात्मन एवौपाधिको जीवभावः प्रतिपादित उपपद्यते। एतेन—"ब्रह्मविदाप्नोति परमि"ति वाक्यमपि—व्याख्यातम्; "स य एवं वित्"इति वाक्ये एवंवित्पदेनोपसंह्रियमाणस्य ब्रह्मवित्पदस्यादित्यपुरुषान्तर्वर्त्त्येकरूपात्मविदित्यर्थकत्वस्यैव युक्तत्वेन तत्रात्मभेदविवक्षाऽयोगात्। ब्रह्मप्राप्तिर्नाम तदज्ञानहानमेव, ननु भेदसापेक्षा गतिरिति पूर्वमेव व्यवस्थापितम्; अन्यथा—आत्मैक्यसिद्धान्तविरोधापत्तेः।

एतेन—नचात्र प्रकरणेऽज्ञानम्, ब्रह्मणि तत्कृतप्रपञ्चारोपः, आत्मनोऽन्नमयादितादात्म्यभ्रमः, अधिष्ठानज्ञानेन तद्बाधः, प्रपञ्चमिथ्यात्वम्, ब्रह्मणो निर्विशेषत्वम्, आत्मैकत्वम्, ब्रह्मण एव जीवभाव इत्यादयो भवत्कल्पिता अर्थाः प्रतिपादिता उपलभ्यन्ते, यद्बलेन सूत्रस्थानीयस्य वाक्यस्य लक्षणादिनाऽर्थान्तरपरत्वं शङ्क्येतापि इत्यादि—परास्तम् ॥

"असद्वा इदमग्र आसीदि"त्यत्र वाक्येऽज्ञानस्य ब्रह्मणि तत्कृतप्रपञ्चारोपस्य च प्रतीतेः, "अन्योऽन्तर आत्माऽन्योन्तर आत्मे" तिपूर्वपूर्वबाधेनोत्तरोत्तरबोधनेनात्मनोऽन्नमयादितादात्म्यभ्रमाधिष्ठानज्ञाननिबन्धनतद्बाधयोः, "उदरमन्तरं कुरुते अथ तस्य भयं भवति" इति भेदनिषेधेनाभेदबोधनेन ब्रह्मणि प्रपञ्चाभावरूपप्रपञ्चमिथ्यात्वस्य, "सत्यं चानृतं च सत्यमभवत्" इति वाक्येन ब्रह्मव्यतिरिक्तस्यापारमार्थिकत्वरूपमिथ्यात्वोपपादनद्वारा ब्रह्मणो निर्विशेषत्वस्य, "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यात्मैकत्वस्य, "तत्सृष्ट्वा तदेवानुप्राविशत्" "यो वेद निहितं गुहायामि"त्यादौ ब्रह्मणो जीवभावस्य चात्र प्रकरणेऽवगमेन प्रकरणस्याद्वैतवादानुकूल्यमेव, न मतान्तरानुकूल्यमिति हि स्पष्टमेव ॥

एतेन—ब्रह्मण एव जीवभावोऽपि—व्याख्यात; "तदनुप्रविश्य" इत्यादिना तदवगमात्। ब्रह्मणः शरीरप्रवेशो हि तदेकदेशान्तःकरणप्रतिबिम्बता वा, तदवच्छेदो वेति—"अत एव चोपमा सूर्यकादिवत्" इत्यादिसूत्रेषु व्यक्तम् ॥

एतेन—ब्रह्मणोऽन्तःकरणप्रतिबिम्बतादिकं न भवतीति शङ्कापि—परास्ता; मुख्यस्य प्रवेशपदार्थस्य भवताऽपि वक्तुमशक्यत्वेन गौणस्यैव प्रवेशपदार्थस्योभाभ्यामङ्गीकार्यत्वात्। यथाच—"ब्रह्मविदाप्नोति" इत्यादिसंपूर्णसंदर्भस्याद्वैतमत एव स्वारस्यम्, तथा पूर्वमेव विवेचितम् ॥

एतेन—अहो न केवलमनुप्रवेशपदार्थम्, "अपितु ब्रह्मविदाप्नोति परम्" इत्यादि संपूर्णाध्यायगतसकलवाक्यार्थमन्यथयतोऽद्वैतवादिनो भवतोऽप्यत्रैवमस्वारस्यशङ्कावकाशः। स एव सह्यतां तावदित्यादि—परास्तम्, सर्वप्रकरणान्यथाकरणस्य भवद्भिरेव क्रियमाणत्वात्।

**अत एव—तद्भावापत्तेर्विवक्षितत्वात् पर एवात्मा संक्रमितेत्यपि—व्याख्यातम्; संक्रमितुरेव संक्राम्यत्वं हि नित्यमाप्तस्यैवाप्तत्वभ्रमनिवर्तनेनैव। ततश्च जीव-ब्रह्मणोरौपाधिक आविद्यके वा भेदे सत्यपि परमार्थगत्या भेदाभावात् प्राप्त्यैव प्राप्तव्योऽपीति निष्कर्षः; अन्यथोपासनासाध्यत्वे हि मोक्षस्यानित्यत्वमापद्येत॥**

एतेन—कर्मसाध्यत्वेऽपि मोक्षस्य नानित्यत्वापातः; प्रतिबन्धककर्मनिवृत्तिर्हि ज्ञानेन साध्यते? "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणाद् न ज्ञानमात्मनः क्रियते तथा। यथोदपानकरणात् क्रियते न जलाम्बरम्। सदेव नीयते व्यक्तिमसतः संभवः कुतः।" इत्यादिशास्त्रादिति—परास्तम्।

**एतादृशसाध्यत्वस्य प्राप्यत्वाद्यन्यतमसंस्कार्यत्वरूपस्य गुणाधानरूपस्य दोषापनयनरूपस्य वाऽप्यनित्यत्वापादकत्वस्य समन्वयसूत्र आकरे व्यक्तमुपपादितत्वात्, ज्ञानेन तत्त्वज्ञाननिवृत्तिरेव क्रियते, नतु वस्तुप्रापणम्; तस्य नित्यप्राप्तत्वात्, इति लेशतोऽपि क्रियासम्बन्धाभावाद् न मोक्षानित्यत्वमद्वैतमते भवति।**

**आत्मभावो हि मोक्षः। स च जीव-ब्रह्मभेदपक्षे नानुकूलः, "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इति वाक्यस्यापि सर्वज्ञब्रह्मभावमापन्नः सन् सह युगपत् सर्वानन्दाननुभवतीत्येवमर्थपरत्वमेव। तथाच तदानुगुण्येन—"अस्माल्लोकात् प्रेत्ये"त्यादीनामपि पूर्वोक्तविधयाऽर्थवर्णनमेव युक्तम्, नतु कर्मानुभवस्थानाल्लोकात् परलोकं प्राप्य हार्दप्राणमनोजीवविशिष्टमानन्दमयं दिव्यमङ्गलविग्रहविशिष्टं परमात्मानं वासुदेवमुपसंपद्य मुक्त**

बन्धो भवतीत्यर्थकत्वम्। मुक्तानां धर्मभूतज्ञानद्वारा सर्वजगत्समीपप्राप्तेः क्रमिकत्वाभावेन तथार्थवर्णनस्यासांप्रतिकत्वात्। सत्यम्—"आवृत्तिरसकृदुपदेशात्।" "आप्रायणात्तत्रापि हि दृष्टम्" इति सूत्रेणावृत्तिरुपपादिता, सा त्व"नावृत्तिश्शब्दात्" इत्यनावृत्तिर्यतोऽन्तिमाधिकरणेन व्यवस्थापिता, तत्साधनविषयैव। अनावृत्तिस्तु—"न स पुनरावर्तते" इत्यादिश्रुत्या जगद्व्यापारवर्जकार्यब्रह्मभाव उपासनासाध्य एव बोध्यते, यत्र गत्यागत्योः संभावना, नतु परब्रह्मभावे; तस्य गतिनिरपेक्षत्वस्य पूर्वमेव साधितत्वात्। तथाच तेन सूत्रद्वयेन गौणमुक्तिसाधनस्यैव विचाराद् न मुख्य-मुक्तिसाधनज्ञानविषयत्वमप्यस्य सूत्रस्य।

एतेन—मोक्षप्रकरणे तत्साधनतयोपदिष्टं ज्ञानमुपासनारूपमेव, इति "आप्रायणात्तत्रापि हि दृष्टम्" "आवृत्तिरसकृदुपदेशात्" इति सूत्राकृतैव स्पष्टमुक्तम्। नहि भवदभिमताब्रह्मत्वव्यावृत्तिरूपमोक्षप्राप्तेर्ज्ञानावृत्त्यपेक्षा; भ्रयस्थले तदपेक्षाया अदर्शनादित्यादि—परास्तम्।

तथाहि—"सोऽकामयते"त्यादिना प्रपञ्चसृष्टिम्, "तत्सत्यमित्याचक्षते" इत्यनेन ब्रह्ममात्रस्य सत्यत्वं चोक्त्वा सत्यस्य ब्रह्मण एव व्यावहारिक-प्रातिभासिकरूपेण भानं "सत्यं चानृतं च सत्यमभवदि"त्यनेन प्रतिपाद्यानन्तरं प्रवृत्तम्—"असद्वा इदमग्र आसीदि"ति। अत्र चाभिव्यक्तनामरूपात्मकस्य प्रपञ्चस्य सृष्टेः पूर्वमसद्रूपत्वं ततः सद्रूपत्वं च प्रतिपाद्यमानं तदैवोपपद्येत, यदि सद्रूपेणाज्ञातं ब्रह्म सृष्टेः प्रागासीत्, सृष्टिकाले तु ब्रह्मणः सद्रूपेण ग्रहणे ततो जायमानः प्रपञ्चोऽपि सद्रूपोऽभवत्—यथा रजतं ज्ञायमानेदंरूपेण भवति, इति प्रक्रियाऽत्र वाक्ये विवक्ष्यते। ततच ब्रह्मणोऽज्ञानमसदेवेति वाक्येन स्पष्टमवगम्यते। अन्यथा—"कथमसतः सज्जायेते"ति श्रुतिविरोधात् "सोऽकामयते"ति पूर्वतनग्रन्थविरोधाच्चासङ्गतमेवेदं प्रकरणमापद्येत। एतेन—ब्रह्मणि

प्रपञ्चारोपोऽपि—व्याख्यातः; सत्यज्ञानादिरूपेण प्रक्रान्तस्य सद्रूपेणाप्यज्ञाने प्रलयः, आनन्दरूपेणापि ज्ञाने तु मुक्तिरित्येव हि तैत्तरीयोपनिषत्तात्पर्यम्। तथाच सद्रूपमात्रेण ज्ञातादानन्दरूपेणाज्ञाताच्च ब्रह्मणः प्रपञ्चोत्पत्तिरिति सिद्धौ शुक्तिरूपेणाज्ञातादिदंरूपेण ज्ञाताच्च शुक्तिपदार्थादुत्पद्यमानं रजतं यथा शुक्तावध्यारोप्यम्, एवं प्रपञ्चोऽपि सद्रूपेण ज्ञाताद् आनन्दरूपेणाज्ञाताच्च ब्रह्मण उत्पद्यमानो ब्रह्मण्यध्यारोप्यते।

अन्नमयाद्यानन्दमयान्तस्य "अन्योऽन्तर आत्मा" अन्योऽन्तर आत्मा" "तस्यैष एव शारीर आत्मे"त्यादिरूपेण पूर्वपूर्वनिषेधेनोत्तरस्योपदिश्यमानत्वात् पुच्छब्रह्मोपदेशानन्तरमन्यस्यानुपदेशाच्च पुच्छब्रह्मेतरमिथ्यात्वमवगम्यते। ततश्चान्नमयात्मत्वज्ञानस्य भ्रमत्वं चावगम्यते।

वस्तुतस्तु--अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहितभुज्यमानादृष्टाभावसहितसाक्षात्कारस्यैव मोक्षसाधनत्वात् तदुत्पत्तिपर्यन्तं श्रवणाद्यावृत्तिनिरूपणार्थमावृत्त्यधिकरणमिति सिद्धान्ताद् आवृत्त्यधिकरणं न साक्षाद् मोक्षसाधनविषयम्। सति चैवं ब्रह्मभाव एव मोक्षः, नतु भेदापेक्षा ब्रह्मप्राप्तिः, "सोऽकामयते" त्यादिना सर्वतादात्म्यस्य प्रतिपादितस्याऽन्यथानुपपत्तेः। इदं हि तादात्म्यं बोध्यमानं निर्विशेषब्रह्माभिन्ननिमित्तोपादानतापक्ष एव संभवति।

सति चैवं सन्निहितं पुच्छं ब्रह्मैव ब्रह्मवल्लीप्रतिपाद्यं तत्त्वम्। "सोऽकामयते" तिपुंलिङ्गेन तच्छब्देन निर्देशस्तु ब्रह्मण एवात्मत्वाद् आत्मभावापेक्षया "तस्माद्वा एतस्मादात्मनः" इत्यत्रेव नानुपपन्नः॥

एतेन—सन्निहिततमत्वात् तत्रैव पुंलिङ्गेन निर्देशाच्च "तस्यैष एव शारीर आत्मा" इत्यत्र निर्दिष्टानन्दमयविषयत्वमेव युक्तमित्यादि—परास्तम्।

"तस्यैष एव शारीर आत्मे"त्यस्य पुच्छब्रह्मविषयत्वस्यैव युक्तत्वेनानन्दमयविषयत्वाभावेनोक्तशङ्काया निर्मूलत्वात् ॥

"तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति हि वाक्यम्—यः पूर्वस्यान्नमयस्य शारीर आत्मा, तस्य प्राणमयस्य एष वक्ष्यमाणो मनोमय आत्मा" इति योजनायामानन्दमयपर्यायगतमानन्दमयातिरिक्तात्मसंभवे तत्परमेव स्वीकर्तव्यम्। सति चैवम्—"ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यप्रतिपादितात्मस्वरूपमेवानन्दमयस्याप्यात्मेति सिद्ध्यति, इति नानन्दमयपरमात्मतायामिदं वाक्यमनुकूलम् ॥

एतेन—यः पूर्वस्यान्नमयस्यात्मा प्राणमयस्तस्यैष वक्ष्यमाणो मनोमयः शारीर आत्मेति योजनायां यच्छब्दप्रतिनिर्देशरूपत्वमेवकारसमभिव्याहृतप्रथमान्तैतच्छब्दस्यैव स्वरसम्, इति तत्त्यागाद् नानुपपत्तिरिति—परास्तम्; तस्यपदवैयर्थ्यापत्त्या योजनान्तरासंभवात्।

योऽयं प्राणमयः, एष तस्य पूर्वस्यान्नमयस्य शारीर आत्मेति योजनायां तु तस्यपदवैयर्थ्यम्, यच्छब्दवैयर्थ्यम्, अयंपदाध्याहारदोषः, भिन्नवाक्यस्थयोस्तच्छब्दपूर्वशब्दयोरन्वयास्वारस्यं च ॥

य एष एव प्राणमयस्तस्य पूर्वस्यान्नमयस्य शारीर आत्मेत्येकवाक्यतां गृहीत्वा योजनायामप्येतद्दोषतादवस्थ्यमेव। पूर्वस्यान्नमयस्य यः, एष प्राणमयः तस्यान्नमयस्य शारीर आत्मेति योजनायां तु यद्यपि तृतीययोजनायामिवानन्दमयातिरिक्तात्मापेक्षा न भवति; तथापि—अन्तरात्मत्व-शारीरत्वयोरभिन्नत्वेन पृथग् निर्देशानुपपत्तिः। तथाच यः पूर्वस्येति भागवैयर्थ्यापत्तिः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिनाऽ"न्नात् पुरुषः"इत्यन्तेनाकाशादिशरीरान्तविकारजातं प्रति "आत्मनः" इत्यात्मशब्दवाच्यस्य शरीरप्रतिसम्बधित्वमात्मत्वं विकारजातस्य शरीरत्वं जीवविलक्षणत्वं च सिद्धम्। सति चैवम्—"अन्नमय-

मात्रस्य परमात्मविकारत्वकीर्तनात् तदात्मकत्वे सिद्धेऽपि प्राणमयादौ तदात्मकत्वमसिद्धम्, एवं मनोमय-विज्ञानमयानन्दमयेष्वपीति शङ्कावारणार्थम्—"तस्यैष एव शारीर आत्मे"तिवाक्यं प्रवृत्तम्, इति प्राणमयादिपर्यायेषु प्राणमयादेरिवानन्दमयपर्याय आनन्दमयस्यापि परमात्मशरीरत्वमेव स्वीकर्तव्यम्; अन्यथा प्रक्रमभङ्गापत्तेः। तथाच नानन्दमयब्रह्मतावाद उक्तयोजनपक्षेऽपि संभवति।

एतेन—आनन्दमयान्तरात्मा न दुर्वचः; अन्तःकरणावच्छिन्नात्मा हि जीवः। स चात्मा परमात्माऽभिन्नः, इति तदन्तरात्मत्वं परमात्मनो न संभवति, इत्यादि—परास्तम्।

"तस्माद्वा एतस्मादि"ति वाक्यनिर्दिष्टस्य पुच्छब्रह्मवाक्येनाप्युपक्षिप्तस्य ब्रह्मण आनन्दमयरूपजीवाधिष्ठानत्वस्य पूर्वमुपपादितत्वेनाधिष्ठानारोप्ययोरभेदवद् भेदस्यापि स्वीकारेण जीव-ब्रह्मणोरभेदेऽपि ब्रह्मणो जीवान्तरात्मत्वस्य संभवात्। तथाच—"तस्यैष एव शारीर आत्मा"इति वाक्यं प्रक्रमैकरूप्यार्थं यथाकथमपि योज्यमानमानन्दमयजीवतावाद एव स्वरसम्, नतु तद्ब्रह्मतावादे; आनन्दपदवाच्यब्रह्मविकारानन्दमयस्य ब्रह्मत्वासंभवात्।

एतेन—"आनन्दो ब्रह्मेति व्यजानात्" इत्यानन्दशब्दस्थाने "आनन्दमयमात्मानमुपसंक्रम्ये"त्यानन्दमयशब्दनिर्देशेन तयोः पर्यायत्वावगामादानन्दमयस्य परमात्मत्वमिति शङ्कापि—पराहता।

प्रथमादिपर्यायान्नान्नमयादीनामपि हि स्थानसाम्येनान्नादिपर्यायत्वापत्त्या—"अन्नात् पुरुषः" इति श्रुतविकारि-विकारभावोऽनुपपन्नः स्यात्, इति ब्रह्मवल्यां विकाराणामानन्दवल्यां च प्रकृतेरेव ग्रहणेनान्नमयादेरिवानन्दमयस्यापि प्रकृतेरेव स्थानसाम्येन स्वीकर्तव्यत्वेन स्थानसाम्यस्याद्वैतपक्ष एवानुकूलत्वात्। तथाच भृगुवल्युपदिष्टानन्दमयोऽपि पूर्वोक्तविधयोपसंक्रमितव्यत्वस्यानन्दमयेऽपि साम्यार्थमन्नमयादीनामिव परमात्मेतरत्वसाधकत्वाद् जीव एव। अतश्च "तस्यैष

एव शारीर आत्मे''ति वाक्य आनन्दमयस्याप्यात्मान्तरसत्त्वविषयतया नयनमेव युक्तम्; अन्यथा वैरूप्यप्रसङ्गात्। विद्यते चात्रापि "ब्रह्म पुच्छं प्रतिष्ठे''तिशैल्यन्तरावलम्बनेनात्मान्तरप्रस्तावः, यस्यानन्दमयस्याप्यात्मतया विवक्षणं संभवति। अन्नमयादिपर्यायाणामुपासनार्थत्वम्, तद्वाक्यशेष उपासनाविधिदर्शनात, आनन्दमयपर्यायस्तु प्रियमोदादिशिरस्कत्वाद्युपदेशात् पुच्छब्रह्मप्रतिपत्तिशेष एव, इति नात्रोपास्यस्वरूपविवक्षा, किन्तु ज्ञेयस्वरूपविवक्षैव। सति चैवं "सोऽकामयते''त्यादिसंदर्भोऽपि पुच्छब्रह्मपर एव; तस्यैव सर्वतादात्म्यस्य कारणत्वनिबन्धनस्य संभवात्।

एतेन—रसो वै स इत्यादिकमपि पुच्छब्रह्मपरमेव; रसानन्दादिपदानां ब्रह्मण्येव स्वरसत्वात्।

तथाच—"यदेष आकाश आनन्दो न स्यात" "आनन्दो ब्रह्मेति व्यजानात्'' इत्यादौ केवलानन्दपदस्य मतान्तररीत्या ब्रह्मपरत्वमपि स्वीकुर्म एव। इदमेव तु विप्रतिपन्नम्—यदानन्दमय एवात्रानन्दादिपदबोध्य इति मतान्तरम्, वयं तु पश्यामः—पूर्वोक्तरीत्या बहुभिः कारणैरानन्दमयजीवत्वस्यैव युक्तत्वाद् नानन्दादिशब्दो ब्रह्मपर आनन्दमयपरो भवतीति। आनन्दविकार एव ह्यानन्दमयपदार्थः; विकारार्थे मयटोऽत्रान्नमयादिसारूप्यार्थमङ्गीकर्तव्यत्वात्।

एतेन—आनन्दमयपदस्य जीववाचित्वे ब्रह्मवाचित्वे वा मयटो विकारार्थत्वासंभवः। नहि जीवस्य ब्रह्मपरिणामित्वं केनापि स्वीक्रियते। प्रकृत्यर्थान्यथाभावो हि विकारः; मृन्मयो घट इत्यादौ तथैव दर्शनात्, आत्मनो देह-प्राणादिविशिष्टत्वेऽपि तत्कार्यत्वायोगात्। अन्यथा हि गृहमयो घटः जलमयं दर्पणमयं वा प्रतिबिम्बमित्यादि व्यवहारापत्तिः। तथाच—प्राणाद्युपाधिपरिच्छिन्न आत्मा प्राणादिविकार इति निर्मलं कल्पनमित्यादि—परास्तम्।

प्रतिबिम्बादि बिम्बकार्ये बिम्बमयमिति व्यवह्रियत एव; तत्र बिम्बस्य यादृशमुपादानत्वम्, तादृशमेव जीवकारणे परमा-

त्मन्युपादानत्वं स्वीक्रियते, इत्यानन्दविकारत्वं जीवस्य प्रतिबिम्बवादे न बाधितम्। अवच्छेदवादेऽप्यवच्छेदकं तद्द्वारा विशिष्टं च चैतन्यं कार्यम्, इति तस्यापि ब्रह्मोपादानकत्वाद् ब्रह्मविकारत्वोपपत्तिः, इति आनन्दमयो जीव इति वादो नायुक्तः। प्रकृत्यर्थान्यथाभाव इव प्रत्यकृत्यर्थान्यथाभानेऽपि हि विकारशब्दो नानुपपन्नः; इदंमयं रजतमिति व्यवहारे बाधकाभावात्, कारणाभेद एव हि कार्यस्य विकारो नाम। स च परिणाम-विवर्तोभयसाधारण एव।

एतेन—प्राणमयादिशब्दोऽपि—व्याख्यातः; यदवच्छेदप्रयुक्तं यस्य कार्यत्वम्, स्वरूपतस्तु नित्यत्वमेव, तत्रोपाधिकार्यत्वप्रयुक्तमेवोपहितकार्यत्वमित्युपाधिमय उपहित इति व्यवहारोऽपि न विरुद्धः। घटकार्यत्वं हि न गृहकार्यत्वनिबन्धनम्, इति न गृहमयो घट इति व्यवहारापत्तिः। एतेन—जलमयं दर्पणमयं वा प्रतिबिम्बमिति व्यपदेशापत्तिरपि परिहृतप्राया; प्रतिबिम्बस्यापि घटादिवत्स्वरूपत एव कार्यत्वेनोपाधिकार्यत्वापेक्षं न प्रतिबिम्बकार्यत्वमिति हि सर्वसंप्रतिपन्नम्। घटाकाशे घटमय इति व्यपदेशापत्तिस्त्विष्टापत्तिरेव। सति चैवमानन्दमय इति विकारार्थमयडन्त इति सांप्रतमेव। एतेन—अन्न-प्राण-मनो-विज्ञानशब्दा भृगुवल्लीगता हिरण्यगर्भसम्बन्धिस्थूलसूक्ष्मशरीरपरा इति पक्षोऽपि युक्त एव। तत्रान्नं स्थूलशरीरम्; मनो-प्राण-विज्ञानानि सूक्ष्मशरीराणि। अधिकं तु वेदान्तसारादौ व्यक्तम्। ब्रह्मवल्यामन्नमयादिशब्दास्तु—समष्टिकार्यव्यष्टिजीवशरीरपराः। व्यष्टेः समष्टिकार्यत्वं चाग्निकार्यत्वाद् विस्फुलिङ्गस्य न विवादास्पदम्। सति चैवमानन्दमयशब्दो व्यष्टिजीवपरः; स्थूल-सूक्ष्म-शरीरावच्छिन्नचैतन्यस्यैव विशिष्टस्य जीवत्वात्, अस्यानन्दमयत्वं चानन्दरूपब्रह्माध्यस्तकारणशरीरावच्छेदेनानन्दकार्यत्वात्। स चानन्दमयो व्यष्टिरूपः समष्टिरूपश्च; उभयोरपि ब्रह्मकार्यत्वाविशेषात्। भृगुवल्यामानन्दपदेन

तु व्यष्टिसमष्ट्युभयविधजीवकारणं ब्रह्म निर्दिश्यते, व्यष्टिकारणं समष्टिशरीरो हिरण्यगर्भः; जीवहिरण्यगर्भयोरुभयोरपि पूर्वोक्तविधया ब्रह्मकार्यशरीरावच्छेदेन ब्रह्मकार्यत्वस्यैव स्वीकारेण जीवस्य हिरण्यगर्भकार्यत्वाभावात् ।

एतेन—अद्वैतमतरीत्या जीवशरीरादेर्हिरण्यगर्भशरीरकार्यत्वाद् जीवस्य हिरण्यगर्भकार्यत्वमेव युक्तम्; तदर्थमानन्दपदमपि भृगुवल्लीगतं हिरण्यगर्भपरमेव व्याख्यातव्यम्, नतु ब्रह्मपरम्, इत्यादि—परास्तम् ।

पूर्वोक्तरीत्या जीवस्य हिरण्यगर्भकार्यत्वाभावात्, शरीरस्येव जीवस्य हिरण्यगर्भस्य वा मुख्यकार्यत्वस्यास्वीकारात्, औपाधिकविकारत्वस्यैव तयोरङ्गीकारात्। औपाधिकविकारत्वं नामोपाधिसम्बन्धोत्पत्तिमात्राधीनोत्पत्तिकत्वम्, तत्सम्बन्धनाशमात्राधीनविनाशकत्वं वा। जीवस्योत्पत्तिरुपाधिसबन्धमात्रेणैव भवति, नान्यथा। एवं तन्नाशोऽप्युपाधिनाशमात्राधीनो भवति। तथाच—यथा 'शिखी ध्वस्तः' इति शिखाध्वंसमात्रेण शिखिध्वंसव्यवहारः, एवं घटाकाशोत्पत्ति-नाशव्यवहारोऽपि घटसम्बन्धनाशमात्राधीनः, घटोत्पत्ति-नाशव्यवहारौ तु न घटस्य भूतलसम्बन्धोत्पत्तिनाशमात्राधीनौ ।

एतेन—सम्बन्धस्य कादाचित्कत्वेन कार्यत्वेऽप्युपाधिविकारत्वाभावेन तद्द्वाराऽऽत्मनि विकारोपपादनं न संभवति। न हि भूतलसम्बन्धस्य भूतलपरिणामत्वव्यवहारस्तन्निबन्धनो 'भूतलं घटमयम्' इति प्रयोगो वा दृश्यत इत्यादि—परास्तम् ।

उपाधिगतस्यैव विकारस्योपहितेऽपि व्यवहारेण गौण एव हि विकार औपाधिको विकारः, इति उपाधिपरिणामत्वाभावेऽप्यदोषात्। प्राणमय-मनोमय-विज्ञानमयेष्वेतादृशमेव विकार्यत्वं मन्यते। विकारे मयट्प्रत्ययो हि गौण-मुख्यसाधारणविकारविषय एव। यथाऽग्निशब्दो गौण-मुख्यसाधारण एव प्रयुज्यते, इति प्राण-

मयादिशब्दगतमयटो विकारार्थत्वं न विरुद्धम्; गौण-मुख्यार्थभेदेऽपि तद्बोधकशब्दभेदस्यानावश्यकत्वात्, मुख्यार्थबोधकस्यैव गौणार्थ-बोधकत्वाभावस्याप्यसंभवात्; अन्यथा गौण्या एव लोपापत्तेः। तथाच प्राणमयादिस्थले गौणविकारेऽपि मयट्प्रत्ययप्रयोगोपपत्तौ किमु वक्तव्यम्—पूर्वोक्तविधया ब्रह्मविकारे जीव आनन्दमय इति विकारार्थो मयडिति॥

अस्ति च—आनन्दशब्दादपि विकारार्थे मयड्विधायकं पाणिनीयं सूत्रम्—"नित्यं वृद्ध-शरादिभ्यः" इति; आनन्दशब्दस्य वृद्धत्वात्। अत्र सूत्र भाषायामित्यनुवृत्त्या भाषायामेव वृद्ध-शरा-दिभ्यो मयडिति तु न प्राप्नोति; भाषायां वृद्ध-शरादिभ्यो नित्यमेव, छन्दसि तु विकल्प इत्यभिप्रायस्यैव युक्तत्वात्; अन्यथा—"शरमयं बर्हिः स्तृणाती"त्यादौ वेदे शरमयादिशब्दानु-पपत्तेः। अत एव हि मतान्तरानुसारिणां "विकारशब्दादिति चेत्" इत्यस्यानन्दमयशब्दे मयटो विकारार्थत्वमभिप्रेत्य शङ्काग्रन्थ-प्रवृत्तिविवरणमुपपद्यते; अन्यथा—आनन्दमय इत्यत्र तन्मतरीत्या विकारार्थत्वशङ्कैव नोदेति, इति सूत्राशयासंस्पर्शिता समापद्येत। अनेन तु ज्ञायते—यद् बादरायणोऽपि"नित्यं वृद्ध-शरादिभ्यः"इत्यत्र भाषायामेवेति विवरणं नानुमन्यत इति मतान्तरानुसारिणामाशय इति।

एतेन—आनन्दपदाद् विकारार्थे"नित्यं वृद्ध-शरादिभ्यः" इति स्मृत्या हि मयड् वक्तव्यः। स च न संभवति; तत्र सूत्रे"मयड्वैतयोर्भाषायाम्" इति सूत्राद् भाषायामित्यनुवृत्तेश्शाब्दिकैरुक्तत्वात्, छन्दसि तत्प्रवृत्त्ययो-गात्, शास्त्रान्तरस्य चानुपलम्भादित्यादि—परास्तम्।

पूर्वोक्तरीत्या भाषायां नित्यमेवेति विवरणस्यैव—युक्त-त्वात्; अन्यथा—पृथक् सूत्रबलेनैव नित्यत्वसिद्धेर्नित्यपदवैयर्थ्या-पत्तेः, अन्यथा शरमयमिति वैदिकोदाहरणासाङ्गत्यप्रसङ्गात्॥

"एकाचो नित्यम्" इति व्याकरणान्तरसंग्रहणं तु शरादिगणपठितमृत्पदेनाप्युपलक्षणविधया भविष्यति। व्यक्तं चैतद् बालमनोरमायाम्।

एतेन—नित्यपदाभावे भाषायां वृद्ध-शरादिभ्यो मयडित्यर्थे सति "मयड्वैतयोरि"त्यनेनैव सिद्धे किमर्थमिदमिति प्रश्ने भक्ष्याच्छादनरूपार्थेऽपि प्राप्त्यर्थमित्यपि तात्पर्यवर्णनसंभवेन तद्वारणेन वृद्ध-शरादिविषयेऽपि विकल्पनिवृत्तितात्पर्यबोधनार्थं नित्यपदमिति कथनं भवतीति शङ्कापि—परास्ता।

'वृद्ध-शरादिभ्यो भक्ष्याच्छादनयोरि'त्येवाभक्ष्याच्छादनव्यवृत्त्यर्थत्वेऽस्य सूत्रस्य सूत्रणमापद्येत, नतु "नित्यं वृद्ध-शरादिभ्यः" इति।

सति चैवं भाषायां प्राप्तो विकल्पो नित्यपदेन वार्यत इत्येव पर्यवस्यति; अन्यथा सत्यपि नित्यपदे भक्ष्याच्छादनयोरर्थे वृद्ध-शरादिभ्यो भाषायां नित्यमित्यापत्तेः पुनरप्यपरिहार्यत्वात्, वा भाषायांपदयोरिवाभक्ष्याच्छादनयोरित्यस्यापि सम्बन्धस्यावश्यकत्वाद् भक्ष्याच्छादनयोरपि स्यादिति शङ्काया एवानुदयेन व्यर्थं चेदं सूत्रमापद्येत वापदानुवृत्तिप्रतिबन्धकस्यात्राविवक्षायाम्, इत्येवं तत्सूत्रवैयर्थ्योपत्तिशङ्कावारणार्थं वृद्धपदे स्वरितविवक्षाव्यवस्थापनेनैव विकल्पव्यावृत्तिसिद्धौ नित्यपदवैयर्थ्यमपरिहरणीयमेव। अतो योगविभागेन—"एकाचो नित्यमि"त्येतत्संग्रहार्थं नित्यपदम्, अथवा भाषायामेव वृद्ध-शरादिभ्यो नित्यम्, छन्दसि तु विकल्प इत्येतदर्थं नित्यपदमिति वक्तव्यम्। तत्र च मृच्छब्दस्य सर्वैकाजुपलक्षणत्वस्वीकारेणैवैकाचो नित्यमित्यस्य संग्रहे सिद्धे पक्षान्तरानुसरणमेव पर्यवस्यति। तथाच छन्दसि मयटो वृद्ध-शरादिभ्यो विकल्प इत्येव स्वरसम्।

एतेन—वेदे बह्वचः प्रातिपादिकात् परस्य मयटः प्राचुर्यार्थकत्वमेवेति शाब्दिकैरुपवर्णितमित्यादि---प्रत्युक्तम्; प्रायिकाभिप्रायत्वात् तदुक्तेः।

तथाच विकारार्थत्वासंभवे प्राचुर्यार्थत्वमपि वेदे न विरुद्ध-मित्येव वक्तव्यम्। सूत्रकृताऽत्र मयटो विकारार्थत्वशङ्का,तद्बाधात् प्राचुर्यार्थकत्वव्यवस्थापनं च न मयटो वेदे विकारार्थत्वासंभवेन, किन्तु प्रकृते तदर्थविवक्षाऽसंभवेनैवेत्येव वृत्तिकृतोऽपि मन्यन्ते। अद्वैतमतरीप्या तु—नानन्दमयशब्दस्य विकारार्थत्वनिरसनेन प्राचुर्यार्थत्वसमर्थनपरम्—"विकारशब्दादिति चेत्, न प्राचुर्यादि" ति सूत्रम्, किन्तु पुच्छशब्दश्रवणाद् न ब्रह्मणः प्राधान्येन प्रतिपाद्यतेति शङ्कानिराकरणपरमेवोक्तं सूत्रम्॥

एतेन—"विकारशब्दाद् नेति चेदि"ति सूत्रेण मयटो भगवतैवात्र विकारार्थत्वनिरसनपूर्वकं प्राचुर्यार्थकत्वं स्थाप्यते, इति नात्र सूत्रकृन्निरस्तार्थकत्वशङ्कापि शोभते; तस्य स्वबुद्धिपरिकलिपतात्यन्तास्वरसार्थकत्वं तु परस्ताद् निराकरिष्यत इत्यादि---निरस्तम्।

भवदभिमतार्थे मयटो विकारार्थत्वस्यैवासंभवे सति" विकारशब्दादि"ति शङ्कोत्तरयोराकाशमुष्टिहननतुल्यत्वेन सूत्रकाराणामानन्दमयपदे मयटो विकारार्थत्वनिरसनाभिप्रायवर्णनस्यात्यन्तावहेत्वात्।

आनन्दमीमांसाया ब्रह्मणो निरतिशयानन्दवत्त्वतात्पर्यमेकमेवानन्दमय इत्यत्र मयटो विकारार्थत्वासंभवेन प्राचुर्यार्थत्वे गमकमिति मतान्तराभिमतम्। यथाचानन्दमीमांसा ब्रह्मस्वरूपानन्दनिरूपणार्थैव, तथा पूर्वमेव विवेचितम्। वस्तुतस्तु—आनन्दमय इत्यत्र मयटो वेदे विकारार्थत्वाभावेनैव प्राचुर्यार्थत्वसंभवे व्यर्थमभ्यासेनानन्दमयस्य ब्रह्मत्वसाधनम्। तथाच—"आनन्दमयोऽभ्यासात्" इति सूत्रस्यैव वैयर्थ्यं मतान्तरे स्यात्, आनन्दमयपदे विकारार्थत्वस्यैवासंभवेन जीवपरत्वसंदेहस्यैवानवसरात्। यथा चैवं सत्यानन्दमयाधिकरणस्यापि वैयर्थ्यम्, तथापि सूचितप्रायमेव; सन्देहाभावेन विचारस्यैवानपेक्षणात्। यदि चानन्दमय इत्यत्र न मयटो

विकारार्थत्वमेव संभवति, तदा प्रायपाठेनापि कथं वा शङ्कोदेति ? अथ मन्येत—लक्षणया "तस्यैष एव शारीर आत्मे"त्यादिवाक्योपपत्त्यर्थं जीवपरत्वशङ्का, तदापि सिद्धान्तासिद्धिः। तत्र च "विकारशब्दादिति चेदि"ति सूत्रासंभवः; अभ्यासेनानन्दमयस्य परमात्मत्वे निर्धारिते लाक्षणिकार्थविवक्षाशङ्कानवसरात्। तथाच विकारार्थत्वमपि मयटो वर्तत इति कृत्वैवोक्तसूत्राणां प्रवृत्तिरिति स्वीकर्तव्यम्। सति चैवं प्रायपाठानुगृहीतं लिङ्गम्, आनन्दमयपदस्य श्रुतित्वे शब्दः, आनन्दमयो जीवः, जीवाहंकारास्पदोत्तरोत्तरसूक्ष्मार्थरूपत्वादित्यनुमानं चानन्दमयजीवत्वे मानम्।

एतेन—आनन्दमयो ब्रह्म, शरीरादिपञ्चमस्थानत्वात्, भृगुवल्ल्याम्नातानन्दवदिति प्रत्यनुमानमपि—प्रत्युक्तम्: विकारार्थकमयडन्तपदाप्रतिपाद्यत्वस्योपाधित्वात्।

भृगुवल्ल्यां हि "आनन्दो ब्रह्मेति व्यजानात्" इत्यानन्दो न विकारार्थकमयडन्तपदप्रतिपाद्यः, इति न ब्रह्म, इत्युपाध्यभावेन साध्याभावसाधनादेव न प्रतिपक्षानुमानावसरः।

आनन्दमय इति हि विकारार्थकमयडन्त एव; निरतिशयत्वापरपर्यायप्राचुर्यार्थकत्वस्य तत्रासंभवात्। तदुक्तं परिमले—"तत्प्रकृतवचने मयट्" इति सूत्रं द्वेधा व्याख्यातं शाब्दिकैः—प्रथमान्तात् प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात् स्वार्थे मयट्। प्रकृतशब्दस्य प्रस्तुतमात्रपरत्वेऽपि वचनग्रहणसामर्थ्यात् प्राचुर्यलाभ इत्येकं व्याख्यानम्, अन्नमयमित्युदाहरणम्। प्राचुर्येण प्रस्तुतमन्नमित्यादिरर्थः। प्रथमान्तात् प्रकृतमुच्यतेऽस्मिन् इत्यर्थे मयडित्यपरम्। अन्नमयो यज्ञ इत्युदाहरणम्। एतत् द्विविधमपि व्याख्यानं न वृत्तिकारमतानुकूलम्। प्रथमपक्ष आनन्दमयपदस्य प्राचुर्येण प्रस्तुतानन्दमात्रपरत्वस्य द्वितीये प्रस्तुतानन्दवत्परत्वस्य च सिद्धावपि तदभिमतस्य प्राचुर्येण प्रस्तुतानन्दवत्परत्वस्यालाभात्, प्रथमेऽन्यपदार्थस्य द्वितीये प्राचुर्यस्य च लाभोपायाभावात्" इति।

द्विविधमिदं व्याख्यानं गृहीत्वैव श्रीभाष्यकारा अपि "प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम्, प्राणापानादिषु पञ्चसु प्राणवृत्तेः प्राचुर्याद्वे"ति वदन्ति ; व्याख्याद्वयेऽपि प्राचुर्य-सम्बन्धयोरुभयोरपि विवक्षायां तु प्राचुर्याद्वेति न संगतं स्यात्। तथाचोक्तव्याख्यद्वयस्य परिमलाद्दतस्य निरसनं स्वमूलाचार्याद्दतपक्षस्यैव निरसनम्। सर्वथा तु तुष्यतुदुर्जनन्यायेन श्रीभाष्यमतं गृहीत्वैव परिमलकाराणां योजनाद्वयम्, नतु वस्तुगत्येति न कोऽपि दोषः। आनन्दमयाधिकरणे बहुषु स्थलेषु स्वार्थिको मयडिति तदीयानां व्यवहारोऽप्यत एवोपपद्यते।

एतेन—आनन्द इत्यस्य "तद्गुणसारत्वादि"त्यादिना "आनन्दो ब्रह्मेति व्यजानादि"त्यत्रेवानन्दवदर्थकतया तदन्वितेन मयटा महोदारः परमकारुणिकः" इत्यादौ महत्व-पारम्यादेरिव विशेषणान्वयिनः प्राचुर्यस्य बोधो निराबाधः, इति प्रथमव्याख्यानमपि वृत्तिकारानुकूलमेवेति—परास्तम्।

"तद्गुणसारत्वत्" इति न्यायो हि केवलगुणवाचकशब्दप्रयोगस्थल एव प्रवर्तते, नतु यथाकथंचिद् धर्मिबोधसंभवेऽपि। तथाचानन्दमयशब्दस्य द्वितीयव्याख्यानरीत्या धर्मिबोधकत्वसंभवाद् विना प्राचुर्यमानन्दविशिष्टबोधनेन जीवपरत्वस्यैव युक्तत्वाच्च न निरतिशयानन्दवतोऽत्र प्रतीतिसंभवः।

अस्तु वा कथंचिद् धर्मिबोधकत्वं तद्गुणसारत्वनयेनानन्दपदस्य; तथापि प्राचुर्यमानन्दवत एव प्रतीयेत; प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्, नतु प्रकृत्यर्थविशेषणान्वितस्वार्थबोधकत्वमिति नियमेन प्रकृत्यर्थविशेषणस्यानन्दस्य प्राचुर्येऽन्वयस्य बाधितत्वात्। 'परमोदारः परमकारुणिकः' इत्यादौ साक्षात्विशेषणस्य विशेष्येणान्वयः। अत्र तु विशेष्यान्वितस्य विशेषणस्य विशेष्यान्तरेणान्वयः, इत्येकान्वितस्यार्थस्य स्वविशेष्यापारतन्त्र्येणान्यान्वयो हि बाधित एव।

वस्तुतस्तु—परमोदार इत्यादावपि परमादिपदस्योदारादि-विशेष्येणैवान्वयः, नतु विशेषणेन; अभेदान्वय एकदेशान्वयस्य 'ऋद्धस्य राजमानङ्गः' इत्यादावव्युत्पन्नत्वस्य प्रसिद्धत्वात्।

अस्तु वा कथंचित प्रचुरानन्दवद्बोधकत्वमानन्दमयपदस्य, यत्रानन्दमयपदं प्रचुराणामानन्दानां निरूपणानन्तरं प्रयुक्तम्। "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः" इति वाक्यं तु नानन्दानां प्रचुराणां प्रस्तावानन्तरं प्रवृत्तम्, प्रस्तोष्यामाणमेव खल्वानन्दप्राचुर्यम्, नतु तत्र प्रस्तुतम्। प्रस्तोष्यामाणास्तु आनन्दाः हिरण्यगर्भानन्दान्ताः, नतु ब्रह्मानन्दः; "यतो वाचो निवर्तन्ते" इति तस्यावाङ्मनसगोचरत्वबोधनात्। "तत्प्रकृतवचने मयडि"ति सूत्रं हि सिद्धान्तकौमुद्यादिव्याख्यानरीत्यापि प्राचुर्येण प्रस्तुतानन्दशब्दादेव मयटं विदधाति, नतु प्रस्तोष्यमाणानन्द-शब्दात्। प्रस्तुतपदस्य प्रस्तोष्यमाणपरत्वं तु न सङ्गतम्; यथाश्रुतार्थ-त्यागे कारणाभावात्।

अस्तु वा प्रस्तोष्यमाणानन्दानामपि प्रस्तुतशब्देन ग्रहणम्, एवमपि गन्धर्व-कर्मदेव-देवेन्द्र-बृहस्पति-प्रजापतीनां जीवानामानन्दा अपि प्राचुर्येण प्रस्तोष्यन्ते, इति प्रचुरानन्दवत्त्वमपि जीवसाधारण-मेव। तथाच जीव-ब्रह्मणोरुभयोरप्यानन्दमीमांसायां प्रचुरानन्दवत्त्वेऽ-वगम्यमाने किमानन्दमयो जीवः, उत ब्रह्मेतिसंशये "तस्यैष एव शारीर आत्मे"त्यादिवाक्यान्वयस्वारस्यस्यानन्दमयजीवतायामेवोप-पत्तिः, नतु तद्ब्रह्मतायामपि। "स एको ब्रह्मण आनन्दः" इत्यस्यापि हिरण्यगर्भपरत्वे तु जीवस्यैव प्रचुरानन्दवत्त्वं प्रस्तुतम्, नतु ब्रह्मणः, इति कथं वाऽऽनन्दप्राचुर्यविवक्षायामपि नानन्दमयो जीवः? निर्वि-शेषप्रधानाया ब्रह्मवल्याः सविशेषानन्दब्रह्मबोधकत्वं तु बाधितमेव।

एतेन—तस्य प्रकरणस्य स्वाभाविकबहुविधधर्मप्रतिपादन-परत्वदर्शनेन निर्विशेषपरत्वासंभव इति—परास्तम्; "यतो वाचो

निवर्तन्ते" इत्यस्य तत्र सर्वधर्मनिषेधपरस्य वाक्यशेषस्य सत्त्वेन निर्विशेषपरत्वस्य निर्बाधत्वात्। यथाचेदं वाक्यं ब्रह्मणो न निरतिशयानन्दवत्त्वं बोधयति, तथा पूर्वमेवोक्तम्। अत एव "ब्रह्मविदाप्नोति परम्" इति ज्ञेयतया प्राप्यतया च विवक्षितं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्मे"ति ज्ञानरूपं त्रिविधपरिच्छेदशून्यं "यो वेद निहितं गुहायामि"ति गुहानिहितजीवाभिन्नं च प्रतिपादितमुपपद्यते। "ब्रह्मविदाप्नोति परमि"ति प्राप्य-प्रापकभावेन भेदव्यवहारस्तु आनन्दरूपेणाज्ञानदशामभिप्रेत्य, आनन्दरूपेणापि ज्ञाने तु—"स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।" इत्येकत्वेनैव व्यपदेशः, इति काल्पनिक एव।

अत एव—"ब्रह्म वेद ब्रह्मैव भवति" "अमृतं मा कुर्वि" त्यादिवाक्यान्युपपद्यन्ते। "निरञ्जनः परमं साम्यमुपैति" इति जगद्व्यापारवर्जमित्यधिकरणगुणसूत्रप्रतिपाद्यपरिच्छन्नसाम्यनिषेधेन जगद्व्यापार-भोगादिसर्वसाम्यप्रतिपादनार्थमेव प्रवृत्तम्; अन्यथा परमपदवैयर्थ्यापत्तेः। "मम साधर्म्यमागताः" इति तु परमपदाभावाद् भेदापेक्षां गौणमुक्तिमेव प्रतिपादयतीति सर्वसंप्रतिपन्नमिदम्।

एतेन—"जगद्व्यापरावर्जं प्रकरणादसन्निहितत्वाच्च" इत्यादिश्रुतिस्मृतिसूत्रैर्मुक्तिदशायां मुक्तस्य ब्रह्मणोऽत्यन्तसादृश्यमात्रबोधनेन "अमृतं मा कुर्वि" त्यादिवाक्यानां तद्विरुद्धब्रह्माभेदबोधकत्ववर्णनं हेयमेव; अमृतशब्देनात्र मुक्तस्यैव ग्रहणात्, ब्रह्मणोऽग्रहणात्; अन्यथा जीवब्रह्माभेदस्य स्वतः सिद्धत्वात् कुर्विति कर्तव्यत्वप्रार्थना नोपपन्ना स्यादिति—परास्तम्।

"जगद्व्यापारवर्जमि"ति हि सूत्रमुत्क्रमापेक्षमुक्तिपरमित्युभयसंप्रतिपन्नम्। उत्क्रमणापेक्षा च मुक्तिर्गौणमुक्तिरित्यद्वैनमतम्, परममुक्तिरप्युत्क्रमणमपेक्षत इति तु मतान्तरम्। तत्र चोत्क्रमणं न परममुक्तिरपेक्षत इति बोधनार्थमेव "प्रतिषेधादिति चेत्, न" स्पष्टो

ष्वेकेषामि''ति सूत्रद्वयम्—"अत्र ब्रह्म समश्नुते" "न तस्य प्राणा उत्क्रामन्ती'' त्यादिवाक्यानुसारेण बोधयति, इति जगद्व्यापारेण साकं ब्रह्मभावः परममुक्तिरित्येव सूत्रकाराशयः। अत एवो"त्तराच्चेदाविर्भूतस्वरूपस्तु" "ब्राह्मेण रूपेण जैमिनिरुपन्यासादिभ्यः" इत्यादिसूत्रेषु मुक्तस्य जीवस्य ब्रह्मणा साकमभेदः प्रतिपादित उपपद्यते। सति चैवम्—"निरञ्जनः परमं साम्यमुपैति" इत्यादिवाक्यान्यपि ब्रह्मभावमेव मोक्षं गमयन्ति, नतु साधर्म्यमात्रम्। "माममृतं कुरु" इति अमृतत्वेन जीवनकरणप्रार्थनापि तु नानुपपन्ना; मृतत्वावस्थानिरसनमेव हि जीवस्यामृतत्वकरणं नाम।

तथाच "ब्रह्मविदाप्नोति परमि"त्युपक्रमोऽद्वैतमतस्यैवानुकूलः। इदं हि वाक्यं संग्रहरूपम्—"तदेषाऽभ्युक्ता" इत्युपक्रम्याम्नातैर्व्याख्यारूपैः—"सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादिवाक्यैरेव निर्धार्यम्, इति युक्तमेव पूर्वोक्तं सर्वमपि, इति ब्रह्मनिर्विशेषताप्रकरणमेव ब्रह्मवल्ली भृगुवल्ली च॥

एतेन—"सोऽश्नुते सर्वान् कमान् सह। ब्रह्मणा विपश्चिते' ति वाक्यमपि—व्याख्यातम्; स ब्रह्मवित् ब्रह्मणा ब्रह्मरूपेण ब्रह्मभावमापन्नः सन् सह=युगपत् सर्वान् कामान् सर्वानानन्दान् अनुभवति, इति विवरणस्यैवात्र विवक्षितत्वेन सहयोगतृतीयाया अत्र विवक्षणाभावेनास्यापि भेदप्रतिपादनपरत्वाभावात्।

सत्यं "सोऽश्नुते सर्वान् कामान् सह" इत्याप्नोतिपदार्थविवरणम्। ब्रह्मणा विपश्चितेत्यपि तु "सोऽश्नुते सर्वान् कामान् सहे" त्यस्य तात्पर्यार्थकथनरूपमेव। सति चैवम्—'परमाप्नोति'-इतिपदद्वयमपि विवृतं भवति; अन्यथा ब्रह्मणा सह सर्वकामानुभवितृत्वविवक्षणे—"परमाप्नोतीति" इत्यविवृतमेव स्यात्। तत्प्राप्तिर्हि तदेव पुरुषार्थो भवेत्, यदि प्राप्यमानन्दरूपं स्यात्। आनन्दरूपत्वं तु ब्रह्मण आनन्दरूपस्य ब्रह्मणोऽवाङ्मनसगोचरत्व-

स्योपरि वर्णयिष्यमाणत्वात् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"तिश्रुत्या युगपदनुभूयमानाः सर्व आनन्दा आनन्दात्मकं ब्रह्मेति बोधनेनैवोपपादितप्रायं भवति, इति "सोऽश्नुते सर्वान् कामान् सहे"ति वाक्यं प्रवृत्तम्। मतान्तरे तु ब्रह्मणा सहेति सहयोगतृतीयाया विवक्षणाद् ब्रह्मण आनन्दानुभवितृत्वं न भवत्येव—"दशभिस्सह पुत्रैस्तु भारं वहति गर्दभी"इतिवत्, इति स्यात्, अथवा पुत्रेण सहागतः पितेत्यादाविवाप्राधान्यं ब्रह्मणः स्यात्, इति सहपदार्थो युगपदित्यर्थविवक्षैव युक्ता। तथाच—युगपत् सर्वानानन्दाननुभवति इति विवक्षणे कथमिदमुपपद्यते—बद्धमुक्तसाधारणसर्वानान्दानां मुक्तेनानुभवासम्भवादिति शङ्कायाम्—युगपत्सवानन्दानुभवितृत्वं नाम स्वप्रकाशचैतन्यस्वरूपब्रह्मभाव एवेति बोधनार्थं ब्रह्मणा विपश्चितेति वाक्यं प्रवृत्तमिति तु निष्कर्षः॥

एतेन—अस्मदादिभिस्तरतमभावेनानुभूयमानानामानन्दानां विषयवृत्तिपरिच्छेदात्मकोपाध्यवच्छिन्नत्वेनाखण्डैकरसब्रह्मानन्दैकदेशत्वेऽनन्यथासिद्धप्रमाणलेशोऽपि नास्ति, स्वेच्छया तदभ्युपगमेऽपि ब्रह्मभूतस्सन सर्वान् कामान् युगपदनुभवतीति प्रतीयमानवाक्यार्थसामञ्जस्यासम्भव इत्यादि—परास्तम्; "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति", इति श्रुत्या लौकिकानन्दानां ब्रह्मानन्दैकदेशत्वसिद्धेः॥

यद्यपि लोके वेदे च—विष्णुमित्रस्य ज्ञानं देवदत्तज्ञानेऽन्तर्गतम्, एवमेवं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति, इत्यादीन्यन्यज्ञानकर्मापेक्षया देवदत्त-रैक्वज्ञान-कर्मणोराधिक्यमेव प्रतीयते, नत्वंशांशिभावः; तथाप्यत्रांशवाचकस्य मात्रापदस्य विद्यमानत्वात् हस्तादिप्रतिप्रतिबिम्बा देवदत्तशरीरस्य मात्रामेवोपजीवन्तीत्यादाविवांशांशिभाव एवात्र मुख्यतयाऽवगम्यते; इति मुख्यार्थत्यागे कारणाभावाद् न ब्रह्मानन्दानामधिक्यापेक्षया—

"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतिवाक्यं प्रवृत्तम्, किन्तु ब्रह्मानन्दस्यैवांशाः प्रतिबिम्बरूपा जीवानन्दा इति भावेनैव प्रवृत्तम्; अन्यथा—बद्ध-मुक्तसाधारणजीवानन्दानां ब्रह्मानन्दापेक्षयाऽत्यन्तभेदे "सोऽश्नुते सर्वान् कामान् सहे"तिवाक्ये ब्रह्मणा सह जीवानामानन्दानुभवितृत्वं किं नाम विवक्ष्यत इति वक्तव्यम्। यदि ब्रह्म स्वानन्दाननुभवति, जीवोऽपि स्वानन्दान्, नतु ब्रह्मानन्दमित्यर्थः, तर्हि—बद्धोऽप्येवमेव स्वानन्दाननुभवति, इति बद्ध-मुक्ताविवेकः समापद्येत। नहि बद्धजीवानामानन्दानुभवकाले ब्रह्म नानन्दाननुभवतीत्यत्र प्रमाणमस्ति ॥

एतेन—ब्रह्मणा सह तद्गुणानश्नुते; सकलकल्याणगुणविशिष्टब्रह्मानुभवतीत्यर्थे ब्रह्मणो गुणापक्षयाऽप्राधान्यस्येष्टत्वेन विरोधगन्धाभाव इति—परास्तम् ॥

तथा सति हि ब्रह्मणो गौणं प्राप्यत्वम्, कामानामेव मुख्यं प्राप्यत्वमित्यर्थविवक्षाऽऽपद्येत। तथाच—"परमाप्नोति"इति श्रुतौ परस्य ब्रह्मणोऽवगतं प्राप्यत्वमत्र बाधितं स्यात्, इति "सोऽश्नुते' इत्यस्य भवदभिमतं "परमाप्नोति"विवरणार्थत्वमपि हीयेत ॥

एतेन—'परमे व्योमन्' विपश्चता ब्रह्मणा सह सर्वान् कामान् समश्नुते इत्यन्वयात् परमव्योमशब्दिताप्राकृतदेशविशेषे एव ब्रह्मणा सह तद्गुणाननुभवतीत्येवोक्तश्रुत्यर्थ इति---परास्तम्।

"यो वेद निहितं गुहायां परमे व्योमन्नि"ति वाक्यान्तरश्रुतस्य परमव्योमपदस्य"सोऽश्नुते सर्वान् कामान् सहे"ति वाक्यश्रुतस्य सहपदस्य च सति संभवे वाक्यान्तरेऽन्वयं विनैवोपपत्तौ तत्कल्पनाया अयोगेनोक्तार्थवर्णनं ह्यसांप्रतमेव; परमव्योमशब्दस्याप्राकृतदेशविशेषपरत्वे प्रमाणाभावात्, "त्रिपादस्यामृतं दिवि"इत्यस्य वाक्यस्य सर्वेषां प्रपञ्चानां ब्रह्मण्यारोपितानामेकपादत्वम्, पादत्रयं तु ब्रह्मणः प्रपञ्चासम्बन्धं सच्चिदानन्दरूपमिति बोधन एव

तात्पर्येण ब्रह्मणोऽप्राकृतदेशविशेषेऽवस्थानबोधनेऽस्य वाक्यस्य तात्पर्यासंभवात् ; अन्यथा ब्रह्मणः स्वतो व्यापकत्वासंभवापत्त्या "आकाशावत्सर्वगतश्च नित्यः" इति श्रुतिविरोधापत्तेः ।

अत एव "ज्योतिश्चरणाभिधानात्" इति सूत्रगुणसूत्रे—"भूतादिपादव्यपदेशोपपत्तेश्चैवम् ।" "उपदेशभेदादिति चेन्नोभयस्मिन्नप्यविरोधात्" इति उपपद्येते ; अन्यथा—"त्रिपादस्यामृतं दिवि" इति वाक्ये दिविपदस्याप्राकृतदेशविशेषपरत्वे तस्य परमात्मदेशत्वात् ततः परत्वं परमात्मनः "अथ यदतः परो दिवो ज्योतिरि"ति वाक्ये प्रतिपादितं विरुद्धमेव स्यात् , इत्यु"भयस्मिन्नप्यविरोधादि"ति सूत्रणमनुपपन्नमेव स्यात् ।

एतेन—"तद्विष्णोः परमं पदम्" इति श्रुतिरपि निर्विशेषं ब्रह्मैव बोधयतीति—सूचितम् ; कठवल्ल्यां ह्ययं श्रूयते, इति तस्याः शुद्धचैतन्यमात्रपरत्वस्यैव युक्तत्वात् । अत एव—"त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इति वरत्रयप्रदानानुसारेणैकत्वेऽप्यात्मविषयस्य प्रश्नस्य प्रायणावस्थायां देहादिव्यतिरिक्तास्तित्वमात्रविचिकित्सनेन कर्तृत्वाद्यनपोहनाच्च जीवविषयत्वम् , धर्माद्यतीतत्वसंकोनेन तस्यैव कर्तृत्वादिरहितचैतन्यमात्रस्वरूपत्वं चादाय पितृसौमनस्याग्निविद्यात्मविद्याप्रश्नानामेवात्र त्रयाणां विवक्षणमुपपद्यते ; अन्यथा—पितृसौमनस्याग्निविद्या—जीवात्म-परमात्मविषयकप्रश्नचतुष्टयकल्पनापत्त्या वरत्रयातिरेकेण प्रश्नकल्पनाप्रसङ्गः ।

अत एव—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति सकलजगत्कारणस्य संहर्तुः परमेश्वरस्याधिष्ठानं स्वरूपचैतन्यं "तं दुर्दर्शं गूढमनुप्रविष्टम्" इति वाक्यनिर्दिष्टं दुर्दर्शरूपतयोपसंह्रियते । "क इत्था वेद यत्र सः" इति; स संहर्ता यत्र, तत् क इत्था इदंतया जानातीति वाक्ययोजनात् । मतान्तरे तु—यत्रपदवैयर्थ्यापत्तिः; स इत्था ईदृश इति को जाना-

तीति योजनमात्रेण तदभिमतार्थसिद्धेः। अत्र—"गूढमनुप्रविष्टम्" इति वाक्येन गुहानिहिताभिन्नत्वमपि दुर्दर्शस्य स्वरूपचैतन्यस्य विवक्षितम्, इति "ब्रह्मविदाप्नोति परम्, यो वेद निहितं गुहायामि"ति वाक्यद्वयेनाप्येकवाक्यताऽवगम्यते, "परमे व्योमन्नि"त्यनेन तु हृदयाकाशस्यैव विवक्षितत्वेऽपि तस्यैव बुद्धिस्थानत्वाद् बुद्धितादात्म्यापन्नत्वमप्यर्थसिद्धमेव। "हार्दमेव तु परमं व्योमे"ति न्याय्यम्" इति वदन्तो भाष्यकारा अप्यत्रानुकूलाः। तत्रतत्र गुहापदेन बुद्धिविवक्षणमप्येतदभिप्रायमेव।

एतेन—"गुहाहितं गह्वरेष्ठं पुराणम्" "दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" "गुहां प्रविष्टौ परमे परार्ध्ये"इत्यादिवाक्यान्यपि—व्याख्यातानि। यद्यपि "गुहाहितम्" "दहरोऽस्मिन्नन्तराकाशः" इति वाक्यद्वये परमात्मन एव ग्रहणम्, न जीवात्मनः, इति "यो वेद निहितं गुहायामि"तिवाक्येऽपि परमात्माभेदस्यैव विवक्षा, न जीवाभेदस्य; तथापि—"गुहां प्रविष्टावात्मानौ हि" इति जीवत्मनोऽपि गुहानिहितत्वस्य विद्यमानत्वाद् यत्र प्रकरणे जीवरूपेण परमात्मविवक्षा प्रतीयते; तत्र गुहानिहितपदेन जीवात्मनो विवक्षा, यत्र तु जीवव्यावृत्तरूपेणोपासनाविशेषे जीवव्यावृत्तधर्माणां निर्देशानुसारेण परमात्मनो विवक्षा, तत्र परमात्मन एव विवक्षेत्येव निष्कर्षः। तथाच—"तस्यैष एव शारीर आत्मा"ति शरीरादिनिहितत्वेनैव सर्वान्तरतया परमात्मनोऽत्र विवक्षणादं जीवाभेदविवक्षायाः प्रकरणेनावगतत्वाद् नात्र केवलपरमात्मरूपेण ब्रह्मणो विवक्षा, किन्तु जीवाभेदेनैव। यथा—दहरे पुण्डरीके वेश्मनि अन्तराकाशोऽपि दहराकाशपदवाच्यपरमात्मस्थानतया विवक्ष्यते, तथाऽत्रापि गुहायां परमं व्योम विवक्षितम्, इति हार्दं व्योम परमात्माभिव्यक्तिस्थानत्वात् परमं व्योम।

एतेन—हार्दाकाशपरत्वे व्योम्नः परम इति विशेषणमपि न संगच्छते। अतः सर्वथोत्तरवाक्य एव 'परमे व्योमन्' इत्यस्यान्वय आवश्यक इति शङ्का—परास्ता।

इदमेवाभिप्रेत्योक्तं ब्रह्मविद्याभरणे—गुहानिहितत्वरूपमान्तरत्वं न ब्राह्मेण रूपेण, किन्तु जैवेनैवेति। अनवच्छिन्नं रूपं ब्राह्मम्, अवच्छिन्नं तु जैवम्, इत्यन्तःकरणोपहितस्य जीवस्य ब्रह्मणश्च स्वरूपतोऽभेदविवक्षामेव तद्वाक्यं गमयति।

एतेन—वेदनकर्तृत्वेन प्रस्तुतस्य जीवस्यानुपदमेव तत्कर्मत्वमङ्गीकृत्य गुहानिहितत्वाभिधानमत्यन्तासङ्गतमिति—परास्तम्; ब्रह्माभेदयोग्यचैतन्यांशमात्रमभिप्रेत्य कर्मत्वस्य विशिष्टरूपेण कर्तृत्वस्य च विवक्षायां बाधकाभावात्।

'परमे व्योमन्' इति परमव्योमशब्दस्य परमात्मपरत्वेन तदाश्रितं हि रूपं जैवं रूपमेवेति हि वस्तुस्थितिः। विशदं हि परमव्योमशब्दस्य परमात्मपरत्वं "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते"त्यत्र। एतेन—"यो वेद निहितं गुहायामि"ति वाक्ये परमव्योमशब्दस्य परमात्मपरत्वेऽत्र जीवाश्रयत्वस्य ब्रह्मणि सिद्ध्या विज्ञानमयपदवाच्यजीवाश्रयत्वान्यथानुपपत्त्याऽऽनन्दमयब्रह्मतैवेति—परास्तम्; विज्ञानमयमात्रजीवताया अनभ्युपगमात्, आनन्दमयस्यैव वस्तुगत्यास्यापि जीवत्वात् तदाश्रयस्य पुच्छब्रह्मण एव प्राधान्यसिद्धेश्च।

अस्तुवा कथंचन गुहानिहितपदेन परमात्मन एव विवक्षा, एवमपि ब्रह्मणा विपश्चितेति अभेदतृतीयया मुक्तस्य ब्रह्मभाव एव विवक्ष्यते, स च न लोकान्तरे, इति नोत्क्रमणमपेक्षते। तथाच 'परमे व्योमन्नि'त्यस्योत्तरवाक्येनान्वयोऽनवसर एव; 'धान्येन धनवान्' इत्यादिप्रयोगेष्वभेदेऽपि तृतीयाया दर्शनात्।

एतेन—ब्रह्मरूपेणेति "विपश्चिता ब्रह्मणेति चोत्थंभूतलक्षणे तृतीया न संभवति; जटाभिस्तापस इत्यादौ तदुदाहरणेऽभेदबोधादर्शनादिति—परास्तम्॥

अत्रेदं तत्त्वम्—अद्वैतमत एकजीववादोऽनेकजीववादश्चेति समस्ति प्रक्रियाभेदः। तत्रैकजीववादे शुद्धब्रह्मभावो मुक्तिः, अनेकजीववादे यावत्सर्वमुक्ति ईश्वरभाव एव मुक्तिः। तथाच—विपश्चिता ब्रह्मणेति सर्वज्ञेनेश्वरेणाभेदो विवक्ष्यते, ज्ञेयं तु ब्रह्माविद्योपहितमेवेति जागद्व्यापारसहितब्रह्मभाव एव तन्मते मुक्तिः। व्यक्तं चैतत् सिद्धान्तलेशसंग्रहे—मुक्तात्मस्वरूपनिरूपणप्रकरणे चतुर्थपरिच्छेदे। सति चैवमीश्वरभावदशायामीश्वरदृष्ट्या "लोकवत्तु लीलाकैवल्यम्" इति न्यायेन मिथ्याभूतस्य भेदस्य सत्त्वात् "सोऽश्नुते सर्वान् कामान् सहे"ति भेदव्यपदेशोऽपि नानुपपन्नः।

एतेन—अखण्डानन्दरूपब्रह्मतापत्तिर्हि तव मते साक्षान्मुक्तिः। तस्यां च दशायां कस्यचिदपि भेदस्याभावेनाखण्डानन्दरूपब्रह्मण एवानुभवविषयत्वासंभवे कथं कामपदवाच्यबहुविधसुखानां तत्त्वं संभवदुक्तिकमित्यादि—निरस्तम्; उक्तरीत्येश्वरभावरूपमुक्तिविवक्षायां सर्वदोषनिरासात्।

एवं च सर्वनदी-नदसम्भेदसमये सरस्वति स्नातो यथा सर्वत्र स्नातो भवति, एवं सर्वानन्दबिम्बरूपं ब्रह्मानन्दमनुभवन् सर्वान् कामान् समश्नुत इति युक्तमेव। अत्र नदीसमुद्रदृष्टान्तादरणं समुद्रसङ्गमानन्तरं नदीनां समुद्रेणेव बिम्ब-प्रतिबिम्बयोरप्यभेदमभिप्रेत्य, नतु समुद्रस्य नदी-नदसमुदायरूपत्ववत् ब्रह्मानन्दस्य लौकिकानन्दसमुदायभावमभिप्रेत्य; अवयवावयविनोरिव बिम्ब-प्रतिबिम्बयोरपि कल्पितभेदाविरोध्यभेदस्यैव स्वीकाराद्। लौकिकानन्दानां ब्रह्मानन्देन नात्यन्ताभेदोऽद्वैतमते विवक्षितः; इति "लौकिकानन्दानां ब्रह्मानन्दत्वे तेषां हेयतैव न स्यादिति शङ्काया नावसरलेशोऽपि; प्रतिबिम्बनाशेऽपि बिम्बानाशेन बिम्ब-प्रतिबिम्बभावस्थले बिम्बाभेदेन प्रतिबिम्बानामपि बिम्बसमानकालिकत्वाद्यभ्युपगमासम्भवात्। तथाचैकानन्दानुभवकाल आनन्दान्तर-

कालासम्भवाद् युगपत् सर्वान् कामान समश्नुते इत्यस्य सर्ववैषयिकानन्दबिम्बानन्दानुभवितृत्वबोधन एव तात्पर्यमवगम्यते, नतु विनश्वरतत्तादृशसर्ववैषयिकानन्दानुभवितृत्वबोधने; हेयत्वेनाभिमतानां प्राप्यत्वस्यानङ्गीकारात ॥

एतेन—हेयत्वेनाभिमतानां प्राप्यत्वेनाभिधानं—'सर्वान् कामा-नि'त्यभिधानं च न साम्प्रतम्; ततश्चाद्वैतमते—"सर्वान् कामान् समश्नुते"इत्यस्य सर्वथा बाध एव प्रसज्येतेत्यादिकम्—अपास्तम्; दत्तोत्तरत्वात् ॥

सति चैवम्—"सोऽश्नुते"इत्यादिश्रुतेर्ब्रह्मतापत्तिलक्षणनिरतिशयानन्दरूपपुरुषार्थप्रतिपादनमेव स्वीकर्तव्यम्; अन्यथा—सहपदस्य—"ब्रह्मणा विपश्चिते"त्यनन्तरमेवाम्नानापत्तिः। तथाच—ब्रह्मणा सहेत्यन्वयः सम्प्रदायागतवाक्यविच्छेदाननुगुणः ॥

अत एव "तेषां ऋग् यत्रार्थवशेन पादव्यवस्था"इति ऋगुलक्षणोपपत्तिः ॥

एतेन—अर्थवशेन वृत्तवशेन वा पादव्यवस्थैवात्राभिमतेति शङ्का—परास्ता;

यत्रार्थवशेन पादव्यवस्थाया असंभवः, तत्रैव हि वृत्तवशेन पादव्यवस्था स्वीकर्तव्या। अस्मदीययोजनायां तु वृत्तवशेनार्थवशेनोभयविधेनापि निमित्तेन पादव्यवस्था स्वरसा, इति किमिति मुख्यं सौत्रं चार्थवशेन पादव्यवस्थारूपं लक्षणमत्र परित्यक्तव्यम्? अर्थवशेनेत्यनेनोत्थिताकाङ्क्षया सापेक्षार्थवशेनेत्येव विवक्षितम्; अन्यथा—"अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातममि" त्यादावप्यर्थवशेन पादव्यवस्था न स्यात्; होतारं रत्नधातमम्" इति पादान्तरापेक्षयैवार्थबोधकत्वात्। तथाच सहशब्दस्य यौगपद्यार्थकत्वे 'युगपत् सर्वान् कामानवाप्नोति' इति वाक्यार्थस्योत्थिताकांक्षया निरपेक्षस्य बोधनाद्'ब्रह्मणा विपश्चिते'ति पादा-

न्तरार्थस्य कर्तृविशेषणतयोत्थाप्याकाङ्क्षयैवान्वयाद् न किञ्चिदनुपपन्नम्।

एतेन—अर्थवशेन पादव्यवस्थेत्यनुसरणमसंभव्येव, सहशब्दार्थभागेऽर्थसमाप्त्यभावात्, ब्रह्मणेति भागान्तरस्यापि यत्किञ्चिदवान्तरार्थबोधकत्वाभावादित्यादि—परास्तम्; यत्किंचिदवान्तरार्थ-तदेकदेशकर्तृ-कर्मादिविशेषणान्यतरार्थबोधकत्वस्यैवार्थवशेनेत्यनेन विवक्षणेन प्रकृतेऽपि तत्संभवेनादोषात्।

अस्तु वा वृत्तवशेनैवात्र पादव्यवस्था, नार्थवशेन, अर्थस्तु यथासंभवमूहनीय इति। तथापि—सहशब्दस्य यौगपद्यार्थकत्वस्य "ब्रह्मणा विपश्चिते" त्यस्य सर्वज्ञब्रह्मभावार्थकत्वस्यैव च योगेन न भवदभीष्टसिद्धिः।

एतेन—नाप्येवमन्वये ब्रह्मणोऽप्राधान्यं दोषः; गुणापेक्षया तस्येष्टत्वात्, भोग्यसाहित्यस्यैव विवक्षितत्वात्, गुणप्राधान्यं हि गुण्यतिशये पर्यवस्यतीति—परास्तम्।

परमाप्नोतीति परस्यैव प्राप्यत्वनिर्देशेन गुणप्राधान्यविवक्षा हि निर्मूला, स्तुतशस्त्राधिकरणे विनाऽपि गुणिनं गुणप्रतिपादकत्वं स्तोत्राणां शस्त्राणां चेति व्यवस्थापनाद् गुणातिशयो न गुण्यतिशये पर्यवस्यतीति नियमः॥

वस्तुतस्तु—मुक्तोपभोग्या गुणाः स्वीया आनन्दा एव, न ब्रह्मानन्दाः, जैवानन्दब्रह्मानन्दयोरत्यन्तभेदात्, इति भवदीयसिद्धान्ते जीवधर्मकामानामुपभोग्यत्ववर्णनं कथं ब्रह्मातिशयपर्यवसायि स्यात्? अतः "पयसा सहौदनं भुङ्क्ते" इत्यादाविव भोग्यसाहित्यविवक्षाया अत्रासंभवात्—'ब्रह्मणा सह" त्यत्रागत्या कर्तृसाहित्यमेव विवक्षणीयम्—यथा "पुत्रेण सहागतः पिता," "दशभिस्सह पुत्रैस्तु भारं वहति गर्दभी" त्यादाविति नियतमूरीकर्तव्यम्। सति चैवं सिद्धान्तसिद्धाञ्जनोक्तरीत्या ब्रह्मणोऽश्नुवानापेक्षयाऽ-

प्राधान्यापत्तिः, ब्रह्मसहभावस्य बद्ध-मुक्तसाधारणसर्वजीवकर्तृकस्व-स्वानन्दानुभवसाधारण्यात् तत्सहभावविवक्षाया आनर्थक्यम् ।

एतेन—ब्रह्मसहभावविवक्षाऽनर्थक्योक्तिरयुक्ता; अचिज्जीव-तत्सम्बन्धिगुणादिरूपसकलप्रकारविशिष्टस्य ब्रह्मण एव ब्रह्म-जीवोभयानुभाव्यत्वोपगमेन तदानर्थक्याभावादित्यादि—परास्तम् ।

"ब्रह्मणा सह कामान्" इति वाक्ये कामपदेनाचिज्जीवादिप्रकाराणां प्रतीत्यभावात्, तत्सम्बन्धिगुणादिप्रतीत्या तेषां ब्रह्मविशिष्टानां प्रतीतावपि तत्तद्गुणादिविशिष्टस्य ब्रह्मणोऽप्रतीतेः । 'परमाप्नोती'त्यनेन तादृशब्रह्मणोऽप्रस्तुतत्वेन तद्विवक्षाया निष्प्रयोजनत्वात्, ब्रह्मणस्सर्वदा सर्वानुमन्तृत्वाद् मुक्तमात्रानुमन्तृत्वेन सहत्वोक्तेरनतिप्रयोजनत्वात्, ब्रह्मवल्यां मुक्तभोक्तृत्वमिति विवक्षायां लक्षणाप्रसङ्गात्, मुक्तानन्दानां ब्रह्मानन्दानां च विलक्षणत्वेन तुल्यत्वायागाच्च । भोगमात्रसाम्यं तु सूत्रोक्तमुपासकभोगविषयम्, नतु मुक्तभोगविषयम्; तस्यैवानन्दरूपत्वेनेश्वररूपत्वेन वा मुख्यभोगाभावात् । स्वस्यैव स्वप्राप्यत्वोक्तिस्तु श्रीभाष्यमते—स्वस्वरूपस्यापि प्रत्यगात्मनो नित्यमाप्तस्य प्रापकत्वानुसन्धानवद् न विरुद्ध्यते; ब्रह्मवित् प्रागनाप्तमिव प्राप्नोतीति तात्पर्यात् । तथाच व्यवहारिकभेदमादायैवाप्नोतीति भेदव्यपदेशः ।

एतेन—गृहिणोऽतिथ्यपेक्षया प्राधान्येऽपि गृहिणा क्रियमाणमादरातिशयं पर्यालोच्यातिथिप्राधान्यद्योतनाय यथा "गृहिणा सहातिथिर्भुङ्क्ते" इति व्यवह्रियते, तद्वत्प्रकृतेऽपि मुक्तविषये ब्रह्मकर्तृकादरातिशयतन्निबन्धनतदभिमतगुणानुभवस्वातन्त्र्यद्योतनाय ब्रह्मणा सह गुणाननुभवतीति व्यवह्रियते । एवं ब्रह्मणः सर्वकामभोक्तृत्वस्य सार्वकालिकतया मुक्तस्यैव स भोगः सांप्रतिकोऽपूर्वः, इत्यत्र प्राधान्यविवक्षया ब्रह्मणा सहेत्युक्तमित्यादिकम्—परास्तम् ।

सहयोगतृतीयानिमित्तस्याप्राधान्यस्य शाब्दगुणाद्यन्वयित्वाभावरूपस्य विवक्षाधीनत्वेनातिथिप्राधान्यविवक्षायां गृहिणोऽ-

प्राधान्यविवक्षायां च 'गृहिणा सहातिथिर्भुङ्क्ते' इति व्यवहारवद्-त्रापि शाब्दगुणाद्यन्वयित्वाभावरूपाप्राधान्यविवक्षयैव हि ब्रह्मणा विपश्चिता सहेति वक्तव्यम्। उच्यते चैवमेव भवद्भिः—ब्रह्मापेक्षयापि तद्गुणा भोग्यतया प्रधाना इति द्योतनाय तथा प्रयोग इत्यादिवद्भिः। सति चैवम्—"ब्रह्मविदाप्नोति परमि"ति प्राप्यत्वेन प्रधानतया मूलवाक्ये विवक्षितस्य ब्रह्मणो हठादेवाप्राधान्यविवक्षाकारणाभावात् सहशब्दस्य यौगपद्यार्थकत्वपक्षे तत्प्राधान्यविवक्षासाधके स्वीक्रियमाणेऽपि वाक्यार्थसामञ्जस्याद् अनाकाङ्क्षितब्रह्माप्राधान्यविवक्षाप्रयोजकसहयोगतृतीयाश्रयणमत्यन्तमेवासङ्गतम्।

एतेन—नहि सहयोगतृतीयाङ्गीकारमात्रेण स्वाभाविकप्राधान्याप्राधान्यनिर्णयस्सुकर इत्यापि—प्रत्युक्तम्॥

न हि वयं ब्रह्मणो वस्तुतोऽप्राधान्यविरोधापत्त्या सहयोगतृतीयां वारयामः, किन्तु वाक्याविच्छेदस्वारस्यादिसिद्धये सम्भवदर्थान्तरविवक्षयाऽपि गतिसंभवेऽपेक्षितब्रह्मप्राधान्यपरित्यागेन तदप्राधान्यविवक्षाया अप्रोजनत्वादेव। तथाच परप्राप्त्युपपादनार्थं प्रवृत्तैस्तद्गुणानामेव प्राप्यत्वोक्तिव्यवस्था नितरामेवायोग्या। नहि सहयोगतृतीयाश्रयणेन ब्रह्मणोऽप्राधान्यविवक्षायाः किमपि प्रयोजनमस्ति।

यथाच परमं साम्यमभेदे एव, तथा पूर्वमेव निरूपितम्, इति "राम-सुग्रीवयोरैक्यमि" त्यादेरिवात्यन्तसाम्यपरत्वस्यैवाङ्गीकार्यतयाऽऽपाततः प्रतीयमानतदभेदविषयकं ज्ञानं भ्रम इति द्योतनाय सहभावोक्तिरिति शङ्कापि न सावसरा; सहभावेनात्यन्तसाम्यविवक्षाऽसम्भवाच्च। नहि किङ्करेण सहागतो राजेत्यादौ राजकिङ्करयोस्सहविवक्षितयोरत्यन्तसाधर्म्यम्, सत्यं ब्रह्मणा सहेति वर्णनाद् जीव-ब्रह्मणोर्भेदः प्रतीयते; साहित्यस्य भेदगर्भत्वात्; तथापि नात्र भेदः सम्भावितः, इति ब्रह्मभावापत्तिरेव विवक्ष्यते।

ब्रह्मणोऽनुमन्तृमत्वेन ब्रह्मवज्जीवस्यानुभवितृत्वेन साहित्यविवक्षाऽपि ब्रह्मणः सदा सर्वानुमन्तृत्वेन सहपदस्य तुल्यार्थकत्वे लक्षणापत्त्या च न सम्भवतीति पूर्वमेवोक्तम् ।

एतेन—लोकेऽन्यकर्तृकस्य स्वकीयसर्वविषयकानुभवस्य स्वानभिमतत्वदर्शनेन तन्न्यायेन मुक्तकर्तृकब्रह्मसम्बन्धिगुणानुभवे तदनभिमतत्वनिरासाय विशिष्यानुमन्तृत्वोक्तिः, एवमर्थसौन्दर्ये सति लक्षणादोषस्यादोषत्वमित्यादि—परास्तम् ।

"परात्तु तच्छ्रुतेरिति" न्यायेन सार्वदिके ब्रह्मानुमन्तृत्वे तस्याभिमतत्वानभिमतत्वविवक्षाया अनावश्यकत्वात्, ब्रह्मभावापत्तिरूपार्थविवक्षायामिव तुल्यार्थविवक्षायामर्थसौन्दर्याभावेन लक्षणाया अदोषत्वाभावाच्च । नहि भोगमात्रसाम्यं मुक्त-ब्रह्मणोः कुत्रापि प्रतिपादितम् ; ईश्वरभावाख्ये निर्गुणब्रह्मभावाख्ये वा मोक्षे गतिनिरपेक्षे जगद्व्यापारवर्जे भोगमात्रसाम्यासम्भवात् । अत एव—"न स पुनरावर्तते" इति गतिप्राप्यादपुनरावृत्तिप्रतिपादकवाक्यार्थेनैव "जगद्व्यापारवर्जमि" त्यधिकरणसमाप्तिः ॥

एतेन—निर्गुण-सगुणभेदेन ब्रह्मद्वैविध्यस्य तदनुसारेणोपसनाज्ञानद्वैविध्यस्य तदानुगुण्येन मुक्तिद्वैविध्यस्य चोपपत्तिवैधुर्यादिभिस्सुदूरनिरास इत्यादि—परास्तम् ।

अन्तस्तद्धर्मादिषु सगुणविचारस्य न स्थानतोऽपीत्यादिषु निर्गुणब्रह्मविचारस्य च सत्त्वेन हि निर्गुण-सगुणभेदेन ब्रह्मद्वैविध्यं श्रुतिसूत्राद्यारूढम् । एवमुपासीतेति तत्र तत्र विधीयमानं पुरुषकृतिसाध्यम्, "तत्त्वमसी" त्याद्युपदेशमात्रजन्यब्रह्मसाक्षात्काररूपं प्रमाणतन्त्रं च ज्ञानमपि हि द्विविधं प्रसिद्धमेव । एतेन—मुक्तिद्वैविध्यमपि—व्याख्यातम् ; गतिसापेक्ष-तन्निरपेक्षमुक्तिद्वैविध्यस्य चतुर्थाध्यायद्वितीयपादे सूत्रकारैरेव व्यवस्थापितत्वात् । अत एव—"ब्राह्मेण रूपेण जैमिनिरुपन्यासादिभ्यः' इति ब्राह्मरूपेण मुक्ता-

वस्थानं प्रतिपाद्य—"जगद्व्यापारवर्जमि"ति भोगमात्रसाम्यमपि प्रतिपादितमुपपद्यते ; अन्यथा—"जगद्व्यापारवर्जमि"ति—"ब्राह्मेण रूपेणे"त्यस्यैव गुणसूत्रतया सूत्रणीयं स्यात्। अस्मिन् प्रकरणे—"अविभागेन दृष्टत्वात्" इति मुक्तस्य ब्रह्मणाऽविवेक-प्रतिपादनमपि जीवस्य ब्रह्मसाहित्येनानन्दानुभवितृत्वशङ्कां विरुणद्धि। तथाच भेदगर्भसाहित्यविवक्षा"तत्त्वमसि" "ब्रह्म वेद ब्रह्मैव भवति" "अविभागेन दृष्टत्वादि"त्यादि श्रुति-सूत्रादि-विरुद्धत्वादपि न सम्भवति।

अत एव "परं ज्योतिरुपसंसद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादौ विवक्षितं स्वस्वरूपम्—आत्मैवेति"आत्मा प्रकरणादि"ति सूत्रेण प्रतिपादितमुपपद्यते। निर्विशेषचैतन्यमेवात्रात्मपदेन विवक्ष्यते, यस्य "चितितन्मात्रत्वादित्यौडुलोमिः" इत्यत्र चिति-तन्मत्रपदेन व्यपदेशः।

एतेन—गुणसामान्यरहितस्य ब्रह्मणः शशशृङ्गसोदरतेत्यादि—परास्तम् ;"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि"इतिपदार्थशोधना-वसरे सूत्रकारैर्निर्विशेषब्रह्मप्राधान्यमेव वेदान्तानामिति व्यवस्थापिततयो-क्तशङ्कानवतारात्। यथाचोक्ताधिकरणस्य श्रीभाष्याद्यभिमता योजना सूत्राक्षराननुगुणा, तथाऽद्वैतमार्तण्डादौ व्यक्तम्।

सति चैवं "ब्रह्मविदाप्नोति परमि"त्यत्रापि गुणवाचकं शब्दं विना केवलब्रह्मशब्देनैवोपक्रमाद् गुणसामान्यरहितं ब्रह्मैव प्राप्यतया विवक्षितमित्यकामेनापि स्वीकर्तव्यम्। अत एव "सत्यं ज्ञानमनन्तं ब्रह्म" इति स्वरूपलक्षणमुपपद्यते। सविशेषस्य वस्तु-परिच्छिन्नस्य त्रिविधपरिच्छेदराहित्यरूपानन्तत्वासम्भवेन त्रिका-लाबाध्यत्व-ज्ञानरूपत्वयोरपि सविशेषेऽसम्भवेन च प्रकरणस्य निर्वि-शेषपरतायां एव युक्तत्वात्। तदुक्तं भाष्ये—"ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्य-शुद्ध-बुद्धत्वादयोऽर्थाः प्रतीयन्ते; बृहतेर्धातो-

र्थानुगमात्''—इति। ज्ञानरूपत्वादेव तु ब्रह्म न घटादिवद् वृत्ति-प्रतिफलितचैतन्यभास्यत्वेन वेद्यमपि। "यो वेदे''त्यादौ ब्रह्मणोऽज्ञानप्रहाणार्थवृत्तिविषयत्वमेव बोध्यते। अत एवाज्ञाननिवृत्तिमात्रेण ब्रह्मप्राप्यत्वव्यवहारोऽपि—"आप्नोति परमि''ति। तथाचाज्ञान-निवृत्त्युपलक्षितत्वमेव ब्रह्मणः प्राप्यत्वम्, नतु ग्रामादिवत् क्रिया-विषयत्वम्। व्यक्तं चैतदाकरे समन्वयसूत्रे। एतेन—ब्रह्मपदस्य निर्विशेषपरत्व उपक्रमावगतबृहत्त्व-वेद्यत्व-प्राप्यत्व-परत्वानामपि प्रहाणापत्तिरिति—परास्तम्; पूर्वोक्तरीत्या निर्विशेषब्रह्मवादेऽपि सर्वोपपत्तेः सम्भवात्। मतान्तर उपक्रमे ब्रह्मणः प्राप्यत्वनिर्देशः, "सो ऽश्नुते''इति तु कामानां प्राप्यत्वपरामर्श इति वैरूप्यापत्तिः।

यथाचाद्वैतमते—कामानिति बहुवचनेन बहुविधोपाधि-भेदावच्छेदेनानन्दरूपं ब्रह्मैव विवक्ष्यते, औपाधिकभेदमादाय बहु-वचनेऽपि वस्तुगत्याऽविरोधात्, तथाऽन्यत्र विस्तृतम्।

अत एव—ब्रह्मपदस्यैकवचनान्तस्य बहुवचनान्तव्यधिकर-णब्रह्मपदसमभिव्याहृतकामपदस्य चैकार्थत्ववर्णनायोग इत्यदि—निरस्तम्; ब्रह्मव्यतिरेकेण कामानां ब्रह्मविदश्चाभाववर्णनार्थं ब्रह्मण एवौपाधिकं रूपान्तरं कल्पितम्—यत् ब्रह्मवित् कामा वेति बोध-नार्थं ब्रह्मविदो ब्रह्मभावत्ववर्णनवत् कामानामपि प्राप्यतया विव-क्षितब्रह्मपदस्थाने प्रयोगेण सर्वोपपत्तेः। सत्यमस्मिन् पक्षे ब्रह्मणो ब्रह्मपदेन बहुवचनान्तकामपदेन च निर्देशेनाथवैरूप्यमिवापतति; तथाप्यौपाधिकभेदमादाय वैरूप्यस्य पारमार्थिकाभेदाविरोधि-त्वाद् न कोऽपि दोषः। एतेन—फलदशायामुपाध्यवच्छिन्नस्य प्राप्य-त्वाभावेन वाक्यार्थासङ्गतिरिति—परास्तम्; ईश्वरभावरूपायां मुक्तौ सिद्धान्तलेशे श्रुति-सूत्रभाष्यारूढतया प्रतिपादितायामुपा-ध्यवच्छिन्नमायावृत्तिप्रतिबिम्ब-तत्तादृशानन्दानुभवेऽपि बाधकाभा-वात्। ब्रह्मभूतो भवतीति वक्तव्ये—ब्रह्मभूतः सर्वान् कामानिति

वर्णनस्याप्ययमेवाशयः। अखण्डबिम्बानन्दानुभवो हि तदैवोपपादितः स्यात्, सर्वान् कामान् सह समश्नुत इति यदि सर्वशब्देन कामा विशेष्येरन्।

एतेन—सर्वानिति विशेषणस्यासुन्दरत्वापादनमपि—परास्तम्; सर्वसब्द्विशेषणं विना केवलकामपदेनाखण्डानन्दरूपब्रह्मोपस्थापनासंभवात्। अत एव—विना गुणिप्राप्तिं गुणमात्रप्राप्तेरसंभवेन ब्रह्मप्राप्तिरप्यर्थादुक्तेति—निरस्तम्; मतान्तरे मुक्तैरनुभूयमानानन्दानां ब्रह्मानन्दाद् भेदस्य तैरेव वर्णिततया ब्रह्मसंकल्पेनाप्यनुभूयमाना आनन्दा न ब्रह्मधर्मा भवितुमर्हन्ति, किन्तु जीवधर्मा एव,इति तदीयन्यायेनापि कामप्राप्तिवर्णनेन तद्धर्मिब्रह्मप्राप्तेरर्थसिद्धत्वाभावात्।

सति चैवम् ब्रह्मणा हेतुना कामानवाप्नोतीति हेतुतृतीयापक्षोऽपि नोपपन्नः, परप्राप्तेरुपक्रान्ताया अनुपपादनात्।

एतेन—ब्रह्मणा परमात्मना हेतुना सकलकल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थ इति विवरणमपि चिन्त्योपपत्तिकमिति—सूचितम्; कामपदस्य ब्रह्मगुणपरत्वे प्रमाणाभावात्॥

तथाऽभ्युपगमेऽपि—सकलकल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थस्य त्वदभिमतस्य ब्रह्मवित्पदार्थत्वेन 'परमाप्नोती'त्येतद्विवरणार्थत्वायोगः; अन्यथा ब्रह्मवित् ब्रह्मविदित्येवापत्तेः, अस्मन्मते तु ब्रह्मवित् ब्रह्म भवतीति वाक्यार्थः "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुत्यैकवाक्यतायोग्यः स्वीकृतो भवतीति सर्वमुपपन्नम्।

अत एव—ब्रह्मणा विपश्चितेति 'ब्रह्मभूतः सन्' इत्यर्थ एव स्वरसमित्यभिप्रेत्यैवेत्थंभूतलक्षणैवात्र तृतीया, न सहयोगादितृतीयेत्युक्तम्। तथाच 'जटाभिस्तापसः' 'श्वेतच्छत्रेण राजा' 'धान्येन धनमि'त्यादौ जटादीनामिव मुक्तात्मस्वरूपज्ञापकं ब्रह्मैव, नतु ब्रह्मातिरिक्तं किमपि स्वरूपं मुक्तस्य वर्तते। यथाहि जटैव

तापसत्वम्, श्वेतच्छत्रमेव राजत्वम्, धान्यमेव तु धनम्, एवमत्रापि ज्ञाप्य-ज्ञापकयोरपेक्षितोऽभेदो वर्तते। इयान् विशेषः—कुत्रचन धर्मो ज्ञाप्यः, कुत्रचन धर्मी ज्ञाप्य इति। उभयत्राप्यभेद एव तृतीया। तथाच धान्येन धनमित्यादौ धर्मिणो ज्ञाप्यत्ववत् मुक्तात्मस्वरूपस्य ब्रह्मज्ञाप्यत्वे विवक्षिते ब्रह्मैव मुक्तात्मस्वरूपमित्यर्थसिद्धं भवति। धर्मस्येव स्वरूपस्यापि लक्षणत्वमत्यन्ताभेदेऽपि भवतीति बहुशोऽद्वैतसिद्ध्यादौ व्यवस्थापितम्। इत्थंभूतस्येदंरूपेण निश्चेयस्य लक्षणं ज्ञापकमेवेत्थंभूतलक्षणम्--तटस्थलक्षण-स्वरूपलक्षणसाधारणम्, नतु कंचन प्रकारं प्राप्तस्य लक्षणमेवेत्थंभूतलक्षणम्; प्रकाशाभिन्नस्य सूर्यस्य प्रकाशलक्षणत्वस्य दर्शनात्। तथाच "सोऽश्नुते सर्वान् कामान् सह" त्युक्ते कोऽयमिति प्रश्ने ब्रह्मणा विपश्चितेति वाक्यं प्रवृत्तम्, इति सर्वकामानश्नुवानोऽयमेव—यत् सर्वज्ञं ब्रह्मेति सुष्ठु लगति।

अयमत्र निष्कर्षः—यद् ब्रह्मसाक्षात्कारपर्यन्तमहंरूपेण प्रतीयमानो जीवो मुक्तः सन् जीवभावपरित्यागेन ब्रह्मभूतो भवतीति ब्रह्मैव तल्लक्षणम्, नान्यः कोऽपि जीवो वा तद्धर्मो वा तदा भवतीति। एतेन—सर्वकामावाप्तेर्ब्रह्मज्ञाप्यत्वासंभवान्नेत्थंभूतलक्षणेत्यादि—परास्तम्; मुक्तस्वरूपस्यैव ज्ञाप्यत्वेन सर्वकामावाप्तेस्तदज्ञाप्यत्वात्। सर्वेषां कामानां ब्रह्मानन्दैकदेशत्वेनाखण्डानन्देन ब्रह्मणा सर्वकामावाप्तेरेव ज्ञाप्यत्वेऽप्यविरोधात्। वैषयिकसुखानि हि ब्रह्मानन्दस्यैव तत्तच्चन्दनादिसंपर्कजनितवृत्त्यवच्छेदेन तत्प्रतिफलनेन वा प्रतीयमानाः परिच्छिन्नाः प्रतिफलिता वा ब्रह्मानन्दा एव। तेषां हेयत्वं तु परिच्छिन्नरूपेणैव, नतु स्वरूपेण। पारमार्थिकं हि स्वरूपं तेषां ब्रह्मानन्द एव, औपाधिकमेव तु विषयसुखं नामेत्युपाधिहेयताभिप्रायमेव तत्र तत्र वैषयिकसुखहेयतावचनम्।

सति चैवम्—ब्रह्मणो निरतिशयानन्दादिगुणविशिष्टत्वेनानन्दरूपत्वाभावः, हेयतया शास्त्रसिद्धसुखविशेषाणामखण्डानन्दात्मकब्रह्मलेशत्वासंभवः, ब्रह्मणो वैषयिकसुखसमुदायरूपत्वे चावयवातिरिक्तावयव्यंभावेनोभयोर्भेदाभावेन ज्ञाप्य-ज्ञापकभावायोगः, सर्वसखण्डानन्दानामखण्डानन्दस्य च क्रमिकत्वेन यौगपद्यासंभवः, अखण्डानन्दलाभदशायां जगतो बाधितत्वेन ब्रह्मव्यतिरिक्तविषयाभावाच्च ज्ञापकत्वासंभवः, ज्ञाप्यत्वेनाभिमतानां तेषां तदानीमभावेन—अश्नुते इत्युक्तिविरोधः, ब्रह्मणः सांशत्व-बाधितत्वादिप्रसङ्गश्चेति—परास्तम्।

"यदेष आकाश आनन्दो न स्यात्" "आनन्दो ब्रह्मेति व्यजानात्" इति वाक्यैर्ब्रह्मैव ह्यानन्दरूपम्, हेयतया तत्र तत्र वर्णितानां सुखविशेषाणामुपाधिहेयताभिप्रायेण हेयत्वम्, नतु स्वरूपन इति प्रतिपादितम्। वैषयिकसुखानां ब्रह्मानन्दप्रतिबिम्बादिरूपत्वस्यैव स्वीकारेणावयवावयविभावानङ्गीकारात्, एकेन बिम्बेन बहुविधप्रतिबिम्बलक्षणाविरोधात्, बिम्बातिरिक्तप्रतिबिम्बाभावेन बिम्बानन्दानुभवे सर्वानन्दानुभवस्याप्यर्थसिद्धत्वेन सर्वानन्दानुभवयौगपद्याविरोधात्, स्वरूपस्यैव लक्षणत्वे ज्ञाप्य—ज्ञापकभेदस्यानपेक्षणात्, ज्ञाप्यत्वेनाभिमतानामपीश्वरभावावस्थायां मिथ्याभूतानामपि लीलामात्रेण प्रत्यक्षाविरोधात्, लौकिकानन्दानां ब्रह्मावयवत्वानङ्गीकारेण ब्रह्मणः सावयवत्वानङ्गीकारेण च ब्रह्मणः सांशत्व-बाधितत्वयोरप्यप्रसङ्गाच्च। तथाच—"ब्रह्मणा विपश्चिते" त्यत्रेत्थंभूतलक्षणैव तृतीया स्वीकर्तव्येति न कथमपि भगवत्पादीयानां विवरणमसाधु भवितुर्हति।

अस्तु वा सर्वकामानुभवस्य सर्वकामानां वा ब्रह्मानन्दानुभवांशत्वं ब्रह्मानन्दांशत्वं वा कल्पितम्। नहि कल्पितमंशत्वं मिथ्यात्वप्रयोजकम्।

एतेन—किमेतद्वाक्यप्रवृत्तेः प्रागेवास्य ब्रह्मानुभवैकदेशत्वं ज्ञातम्? उत न? न चेद्, अंशत्वज्ञानाभावे ब्रह्मानुभवज्ञापितत्वस्यासिद्धतया

प्रकृततृतीयायास्तादृशार्थकत्वनिश्चयासंभवः, ज्ञातं चेत्, तर्हि विनैव प्रमाणेन तत्सिद्धौ तत्परप्रकृतवाक्यवैयर्थ्यम्। अतः—"अश्नुते सर्वान् कामान् सहे"ति कृत्स्नस्य ब्रह्मानुभवांशप्राप्त्यर्थकत्वे श्रौताबाधितार्थ-त्यागप्रसङ्गाच्च ज्ञापकतृतीया दुर्घटेत्यादि—निरस्तम्; ज्ञातत्वपक्षमादाय सर्वनिर्वाहात्।

अनेन हि वाक्येन प्रमाणान्तरज्ञातमंशांशिभावमादाय ब्रह्मानुभवस्य सर्वकामानुभवज्ञापकत्वमात्रं क्रियते—यथा जटाभिस्तापस इत्यादौ जटया प्रमाणान्तरज्ञातया तापसत्वस्य ज्ञानम्, इति नैतद्वाक्यवैयर्थ्यापत्तिः। तदेवं "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिते" त्यस्य ब्रह्मभूतस्सन् सर्वान् आनन्दान् युगपदनुभवतीत्येव वाक्यार्थोऽनुसन्धेयः, नतु मतान्तराभिमतरीत्येति सिद्धम्।

यथा श्रीभाष्यानुयायिनः शिवाद्वैतं शंकरभगवत्पादाननुमतं सकलश्रुति-पुराणेतिहासादिविरुद्धं च मन्यन्ते, एवमद्वैतिनो विष्णवद्वैतमपि तादृशमेव मन्यन्ते; शिव-विष्णूभयानुगतचैतन्य-स्वरूपस्यैव मायाऽतीतस्य परमात्म-परब्रह्मादिपदवाच्यस्याद्वैतिभिः सकलश्रुति-स्मृति-पुराणादितात्पर्याङ्गीकारात्। दहरविद्यादिषु तु यत्र सगुणं प्रतिपाद्यमुपास्यम्, तस्य सूतसंहिताद्यनुसारेण यदि सदाशिवत्वं शैवा मन्यन्ते, यदि वा नारायणत्वं वैष्णवाः, मन्यन्तां नाम ते सर्वेऽपि यथासंभवम्। शङ्करभगवत्पादा हि शिव-विष्णवो-रन्तरपक्षविरोधिनः सर्वपदवाच्यस्य सर्वरूपस्य च तस्य शिवादि-वाच्यत्वं न विरुन्धन्ति। तथाच—

"अस्मिन् ब्रह्मपुरे वेश्म दहरं यदिदं सुराः।
पुण्डरीकं तु तन्मध्ये आकाशो दहरोऽस्ति तु।
स शिवः सच्चिदानन्दः सोऽन्वेष्टव्यो मुमुक्षुभिः।
स विजिज्ञासितव्यश्च विना संकोचमांस्तिकाः।

अयं हृदि स्थितः साक्षी सर्वेषामविशेषतः,
तेनायं हृदयं प्रोक्तः शिवः संसारमोचकः।"

इत्यादिश्लोका अपि यदि प्रमाणम्, न नः किंचिदपि छिन्नम्।

स्मृत्यधिकरणे—

"अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः
स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः।"

इत्यादिभगवत्पादभाष्यं तु यदि तुरीयस्य परमात्मनः सदाशिवादिपदवाच्यत्वमिव सूतसंहितादिवचनानुसारेण, नारायणपदवाच्यत्वमपि स्वीक्रियते, तावताऽपि न नः छिन्नमित्येव गोचरयति। अत एव तत्र तत्राधिकरणे संशय-सिद्धान्तादिनिरूपणावसरे परमात्म-परब्रह्मादिशैव-वैष्णवोभयाभ्युपेतपदेनैव परमात्मनो निर्देशो भाष्ये दृश्यते, नतु शिव-नारायणादिपदेन।

वस्तुतस्तु—परमात्म-परब्रह्मादिशब्दैरिव परमेश्वरशब्देनापि बहुषु स्थलेषु भगवत्पादाः परमात्मानं निर्दिशन्ति, इति तुरीयसदाशिवतावादस्यापि न भगवत्पादा विरोधिनः; परमेश्वरशब्दस्य शिव-महादेवादिशब्दानामिव सदाशिव एव मुख्यत्वात्। गौण्या वृत्त्या विष्णुपरत्वकल्पनायां तु नारायणपदस्यापि शिवपरत्वकल्पना तथैवाविशिष्टेति न कापि विनिगमना शङ्करभगवत्पादानां वैष्णवमतपक्षपातित्वे।

एतेन—"सोऽपि नारायणः श्रीमान्" इत्यादिवचनान्यपि—व्याख्यातानि। सूतसंहिताश्लोकाः प्रक्षिप्ताः, स्वाभिमता एव श्लोकाः प्रमाणमिति तु मनोरथमात्रम्। भवदीयश्लोका एव प्रक्षिप्ताः, सूतसंहितावचनान्येव प्रमाणानीत्यपि हि समापद्येत। यथाच नारायणोत्कर्षनिरूपणपरत्वं पुरुषसूक्तादेर्वैष्णवैर्मन्यते—"स ब्रह्म स शिवस्सेन्द्रः सोऽक्षरः परमः स्वराट्" इति

मन्त्रे "स हरिः" इति भागस्य प्रक्षिप्तत्ववर्णनेन, एवं शैवा अपि शिवोत्कर्षपरत्वमेव पुरुषसूक्तस्येति—"स ब्रह्म स हरिः सेन्द्रः" इतिमन्त्रपाठं "स शिव" इत्यस्य प्रक्षिप्तत्ववर्णनेन व्यवस्थापयन्ति। वयं त्वद्वैतिनः—"स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति शिव-हर्यादिसर्वशब्दवाच्यत्वं तुरीयस्य पुरुषस्य कस्याप्यंशस्य प्रक्षिप्तत्वानङ्गीकारेण स्वीकुर्मः। एतेन—श्लोकशैल्यपि प्रक्षिप्तत्वमवगमयतीत्यादि परास्तम्; "सोऽपि नारायणः श्रीमान्" इत्यादीनामपि तथासति प्रक्षिप्तत्वापत्तेरित्यलमधिकेन प्रासङ्गिकेन विचारेण।

तथाच सगुणस्य तुरीयस्योपास्यतया विवक्षितस्य सदाशिवत्वं नारायणत्वं वा न वयं विशिंषामः, इत्यनेकजीववादेन यावत्सर्वमुक्ति यादृशेश्वरभावो मुक्तिः, स परमात्मा परं ब्रह्मेत्येवमेव वयं निष्कर्षामः। मुक्तौ हि जीवस्य वस्तुगत्याऽभेदेऽपि सर्वमुक्त्यनन्तरं निर्विशेषब्रह्मणा साकमत्यन्ताभेदेऽपि वा प्राप्यप्रापकत्वव्यवहारो नानुपपन्नः; यथा श्रीभाष्यमते—आविर्भूतगुणाष्टकस्य जीवात्मन एव परिशुद्धस्वभावस्य प्राप्तृत्वं प्राप्यत्वं च।

> एतेन—मुक्तौ सर्वकर्मनिवृत्त्या गुणाष्टकाविर्भावाभ्युपगमेन तद्विशिष्टस्यात्मनः प्राप्यत्वं केवलस्य प्रापकत्वमिति शुद्धाद्विशिष्टस्य विशेषणभेदेन भेद इत्यपि—व्याख्यातम्।

इयान् विशेषः—यदस्मन्मतेऽन्तःकरणविशिष्टस्य प्रापकत्वम्, विगलितान्तःकरणस्य स्वरूपस्य प्राप्यत्वमिति। अन्तःकरणोपाधिसम्बन्धासम्बन्धप्रयुक्तो भेदो जीवेश्वरयोरिव जीव-निर्विशेषचैतन्ययोरपि नाद्वैतिनामपि विरुद्धः। इममेव भेदं गृहीत्वा—"भेदव्यपदेशाच्चान्यः" "नेतरोऽनुपपत्तेः" "अधिकं तु भेदनिर्देशात्" "अंशो नाना व्यपदेशादित्यादि" सूत्राणि प्रवृत्तानि, इति तत्तत्सूत्रभाष्ये भगवत्पादैरेव विशदीकृतम्। इदमेवाभिप्रेत्य सिद्धान्तसिद्धाञ्ज-

कारा:—"आप्नोति परम्" इति भेदव्यपदेशस्तु प्राचीनभेदाश्रयो नेयः; ब्रह्मवित् प्रागनाप्तमिवाप्नोतीति तात्पर्यादिति वर्णयन्ति।

एतेन—यदपि सिद्धान्तसिद्धाञ्जनकाराणां भेदव्यपदेशनयनम्, तदपि क्लिष्टत्वादेव हेयम्, मुक्तावभेदबोधकानन्यथासिद्धप्रमाणाभावादित्यादि—परास्तम्; "ब्रह्म वेद ब्रह्मैव भवति" "तत्त्वमसि" "स याश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यादीनामनन्यथासिद्धानां बहूनां प्रमाणानां पूर्वमेव प्रदर्शितत्वात्।

तथाच—"ब्रह्मविदाप्नोति परमि"ति श्रुतिरद्वैतमतमेव पोषयति। श्रीभाष्यमते तु यत्राविर्भूतगुणाष्टकस्वरूपस्य जीवात्मन एव प्राप्तिर्मुक्तिर्नाम, तत्र "ब्रह्मविदाप्नोति परमि"त्यत्र परपदार्थो यद्याविर्भूतगुणाष्टको जीव एव स्यात्, तर्हि ब्रह्मप्राप्तिरेव पुरुषार्थ इति समन्वयाधिकरणादिप्रतिपादितमसङ्गतं स्यात्। यदि "आनन्दमयमात्मानमुपसंक्रामती"त्यादीनां तदभिमतयोजनाप्रकारेण ब्रह्मप्राप्तिरेव परप्राप्तिः, तर्हि सर्वकर्मनिवृत्त्या गुणाष्टकाविर्भावेण तद्विशिष्टस्य स्वात्मन एव प्राप्यत्वमिति स्वोक्तिविरोध इत्युभयतःपाशा रज्जुः। अस्मन्मते तु ब्रह्मण एव विगलितान्तःकरणाद्युपाधिकस्य कोशपञ्चकातीतस्य वा परपदार्थत्वाद् न कोऽपि विरोधः।

एतेन—परस्य तु मुक्तिदशायां प्रागनाप्तस्य कस्यचिदभ्युपगमाद् निर्विशेषस्यैकस्यैवावस्थानं मुक्तिरिति स्वीकारात्, तदा प्राप्य—प्रापकाकारभेदानभ्युपगमात्, मुक्तिदशायां क्रिया-कर्तृ-कर्मणां त्रयाणां भेदानङ्गीकारेण मुक्तौ ब्रह्मानुभवतीत्युक्त्यसंभवात् "परमाप्नोती"त्यस्य स्वरसार्थबोधकत्वभङ्गापत्तिः; तादात्विक-प्रामाणिकभेदाविरोधेन व्याख्याया एव युक्तत्वादित्यादि—परास्तम्।

पूर्वोक्तरीत्या केवलरूपेण प्रागनाप्तस्यैव विशिष्टशुद्धभेदाङ्गीकारेऽद्वैतिभिरपि प्राप्त्यभ्युपगमो हि संभवत्येव। अनाप्तमिव मन्यमानं प्राप्तमेव प्राप्तत्वेन व्यपदिश्यत इत्यद्वैतिनां तत्र तत्र व्यवहारस्तु "विशिष्टं शुद्धादतिरिच्यते इति मताभिप्रायेणैव। तथाचानेक-

जीववादे सर्वमुक्त्यनन्तरं निर्विशेषावस्थानस्यैव मुक्तित्वस्वीकारेऽपि मुक्तिक्षणपर्यन्तं प्राप्यप्रापकाकारभेदस्य क्रियाकर्तृकर्मभेदस्य चाद्वैतवादेऽप्युपपन्नतया ब्रह्मवित् परमाप्नोतीति नानुपपन्नम्। मुक्तो ब्रह्मभूत इत्येवाद्वैतिनां सिद्धान्तः, नतु मुक्तो ब्रह्मानुभवतीति। 'मुक्तो ब्रह्मानुभवतीत्युक्त्यसंभवापत्तिरि'ष्टापत्तिरेव। नहि मुक्तौ जीवब्रह्मभेदसाधकमनन्यथासिद्धमेकमपि प्रमाणमस्ति, इति तादात्त्विकप्रामाणिकभेदलाभ इत्यादि तु स्वमनोरथमात्रकल्पितमाशामोदकमेव। तदेवं प्रमाणान्तरानुगुणोपवर्णितस्वार्थिकाया "ब्रह्मविदाप्नोति परमि"तिश्रुतेः, यथाश्रुतेऽनन्वयादिदोषपराहतस्य "सोऽश्नुते सर्वान् कामान् सहे"तिश्लोकस्य चोपबृंहणीयोपबृंहणभावाभावादविश्वसनीयार्थक इति शङ्का तु—भगवत्पादादृतप्रणाल्या—सः=ब्रह्मवित्, विपश्चिता=ब्रह्मणा=सर्वज्ञब्रह्मभावापन्नः सन्, सह=युगपत्, सर्वान् कामान्=सर्वानानन्दाननुभवति; ब्रह्मस्वरूपातिरेकेण वैषयिकानन्दानामभवात् ब्रह्मस्वरूपानुभवस्य सर्वकामानुभवरूपत्वादित्यर्थविवक्षणे सर्वथा निरवसरा।

यत्तु—सः ब्रह्मोपासकः जीवन्नपि—एतद्देहविशिष्टोऽपि मुक्तः सर्वं ब्रह्मशरीरत्वेन ब्रह्मात्मकं पश्यन् सकलकल्याणगुणकब्रह्मानुभवैकरसस्तत एव मुक्ततुल्यः विदितब्रह्मरूपेण ब्रह्मणो दिव्यमङ्गलविग्रहेण हेतुना सकलान् पुत्रादीन् शास्त्राविरुद्धान् स्वस्येच्छाभावेऽपि भगवता प्रीतिपरवशेन दत्तान् युगपदश्नुते। तत्र न संशयः कार्यः, इति मुक्त्यनुभवदृढीकरणे वाक्यतात्पर्यम्। अथवा—सः मुक्तः त्यक्तसांसारिकजीवनो विदितब्रह्मरूपेण जीवन् ब्रह्मस्वरूपदर्शनलब्धात्मजीवनो निदिध्यातब्रह्मरूपमलक्षणाप्राकृतरूपलाभेन कैङ्कर्यवृत्त्या जीवन् सर्वान् कामानश्नुते—इत्येवं "सोऽश्नुते सर्वान् कामान् सहे"त्यस्य विवरणम्।

तदिदं ब्रह्मप्राप्त्यनुपपादकत्वात् "ब्रह्मविदाप्नोती"त्यस्य अर्चिरादिमार्गसापेक्षदिव्यमङ्गलविग्रहलाभनिबन्धनोक्तविधसर्वकामावाप्तेः सगुणविद्याफलत्वेन प्रक्रान्तनिर्विशेषब्रह्मविद्याफलत्वाभावात् सगुण-निर्गुणभेदेन ब्रह्मद्वैविध्यस्य कल्पित-पारमार्थिकरूपेण पूर्वं व्यवस्थापनाच्च न क्षोदक्षमम्।

एतेन—नच पूर्वोक्तं सगुणोपासनाफलमिति वाच्यम्; ब्रह्मद्वैविध्ये प्रमाणाभावादित्यादि—परास्तम्; "तस्माद्वा एतस्मादि"त्यादिना वस्तुपरिच्छेदरूपानन्त्यप्रतिपादनाय प्रपञ्चाध्यारोपस्य क्रियमाणस्य ब्रह्मनिर्विशेषतामपि विनाऽनुपपत्तेः।

अयं भावः—"तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिना ब्रह्मण आकाशादिकार्यजातं प्रत्युपादानत्वमुभयसंप्रतिपन्नम्। इदं चोपादानत्वमन्नमयादीनामानन्दरूपब्रह्मणि पर्यवस्यति। तच्चोपादानत्वं घटादौ मृदादेरिव यदि परिणामित्वम्, तर्हि "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे" त्यपि मतद्वयसंप्रतिपन्नम्।

सति चैवं तच्छरीरप्रकृतिगतमेवोपादानत्वं ब्रह्मगततयाऽप्युपचारात् किं विवक्ष्यते, उत ब्रह्मैव कथमप्युपादानं भवितुमर्हतीति समालोचनीयम्। तत्र परिणाम्युपादानातिरिक्तोपादानासंभवात् ब्रह्मपरिणामित्वस्य च स्वतोऽसंभवात् प्रथम एव पक्षः साधीयानिति श्रीभाष्यानुसारिणो मन्यन्ते। नहि शुक्तिकाया रजतमुत्पद्यते, रज्ज्वा वा सर्प इति व्यवहारो वर्तते, येन शुक्तिकाया इव पारिभाषिकं विवर्तोपादानत्वमूरीक्रियेत। तन्निष्ठावस्थाविशेषपूर्वभाव्यवस्थाविशेषवत्त्वं ह्युपादानत्वं मृदादौ दृष्टम्, इति तदाशयः।

अद्वैतिनस्तु मन्यन्ते—ब्रह्मण एवोपादानत्वं स्वतन्त्रमङ्गीकर्तव्यम्। अन्यथा "सर्वं खल्विदं ब्रह्म" "सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। सत्यं चानृतं च सत्यमभवत्" इति प्रकृतिकार्यव्याकृतप्रपञ्चतादात्म्यं ब्रह्मणोऽवगम्यमानमनुपपन्नं स्यात्। न ह्यन्यकार्यस्यान्येन तादात्म्यम्। स्वाभिन्नकार्यजनकत्वं ह्युपादानत्वं नाम। नहि शरीरतादात्म्यमिव शरीरकार्यतादात्म्यमपि शरीरिणि कुत्रापि दृष्टम्, येन प्रकृतितादात्म्यनिबन्धनं तत्कार्यतादात्म्यमपि स्वरसं स्यात्। अन्यच्च प्रकरणे—"सत्यं चानृतं च सत्यमभवत्" इति सत्यानृततादात्म्यं ब्रह्मणः प्रतिपादितमनृतस्यापि स्वशरीरप्रकृतिकार्यत्वस्वीकारेणैव वक्तव्यम्। तच्च प्रकृतिकार्यस्यासत्यत्वायोगाद् नोपपद्यते। सति चैवं ब्रह्मण एव शुक्त्याद्यवच्छेदेन विवर्तोपादा-

नत्वस्वीकारेणैव तदुपपत्तिर्वर्णनीया। विवर्तोपादानत्वमपि स्वाभिन्न-कार्यजनकत्वं परिणाम्युपादानत्वसाधारणमेव, न पारिभाषिकम्। इयान् विशेषः—यत् स्वनिष्ठावस्थाविशेषपूर्वभाव्यवस्थाविशेषवत्त्वं भवदभिमतमुपादानत्वं परिणाम्युपादानत्वस्यैवासाधारणं रूपम्। नचेदं भवदुक्तरीत्या मृदादाविव ब्रह्मणि संभवति। घटोपादान-मृदादौ पिण्डत्वाद्यवस्थाया घटोत्पत्त्यनन्तरमविद्यमानत्वात्पूर्वभावि-त्वमात्रमिव ब्रह्मणि प्रपञ्चोत्पत्त्यनन्तरमविद्यमानायाः पूर्वमेव विद्य-मानायाश्च कस्याश्चनावस्थाया निर्वक्तुमशक्यात्वात्। सति चैवं कथं ब्रह्म घटाद्युपादानं भवन्मतरीत्येति भवन्त एव विवेचयन्तु।

घटादौ मृदाद्युपादानत्वात् परमतेऽपि मृद इव तदवच्छिन्नचै-तन्यस्यापि तदुपादानत्वमवश्यमेव स्वीकर्तव्यम्; अन्यथा घटः सन् इत्यादिव्यवहारानुपपत्तेः। एतादृशं चैतन्यगतमुपादानत्वं गृहीत्वैव—"वाचारम्भणं विकारो नामधेयम्। मृत्तिकेत्येव सत्य-मिति" श्रुतौ मृत्तिकासत्यत्वं तत्कार्यस्य सत्यविलक्षणत्वं च प्रतिपादितमुपपद्यते। इदं च विवर्तोपादानत्वं चैतन्यस्य विशदं गमयति। श्रीभाष्यमते तु—कार्य-कारणयोरुभयोरपि सत्यत्वात् "मृत्तिकेत्येव सत्यमिति" मृत्तिकामात्रसत्यत्वमनुपपन्नं स्यात्। चैतन्यमात्रसत्यत्वविवक्षायां तु न किमपि विरुद्धम्। यथाच वाचारम्भणश्रुतेः श्रीभाष्यानुयायिनां विवरणं चिन्त्योपपत्तिकम्, तथाऽद्वैतमार्तण्डेऽस्मदीये व्यक्तम्। तदिदं सिद्धम्—"तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिसन्दर्भो ब्रह्मणि प्रपञ्चा-ध्यारोपमादाय तद्विवर्तोपादानत्वमेव गोचरयतीति प्रपञ्चस्य सर्वस्य तत्रारोपितस्य मिथ्यात्वाद् निर्विशेषब्रह्मवाद उक्तश्रुत्यारूढोऽपि।

एतेन—न ह्यत्र वस्तुतश्शुक्तिकामुद्दिश्येदं रजतमितिवत् वस्तुतो निर्विशेषं ब्रह्मोद्दिश्यायं प्रपञ्च इति व्यवहारो दृश्यत इत्यादि—परास्तम्; "सच त्यच्चाभवत्" इत्यादिना "सत्यं चानृतं

च सत्यमभवत्'' इत्यन्तेन निर्विशेषं ब्रह्मोद्दिश्यायं प्रपञ्च इति व्यवहारस्योपपादनात्। अत एव—"असद्वा इदमग्र आसीत्। ततो वै सदजायत'' इत्यत्र सद्रूपेणाज्ञातात् ब्रह्मणः सत्तादात्म्यापन्नस्य प्रपञ्चस्योत्पत्तिराम्नायते। अनेन च—वस्तुगत्या प्रपञ्चस्य न सत्यत्वम्, किन्तु सद्रूपकारणसंसर्गादेव सत्यत्वमिति ज्ञाप्यते। अयमेव चार्थः—"यदिदं किंच तत्सत्यमित्याचक्षते'' इत्यत्र सत्यस्य सत्यानृतभावोपपादनानन्तरं प्रवृत्तेः, सत्यकारणकत्वादेव सर्वस्य दृश्यमानस्य सत्यानृतरूपकार्यजातस्य सत्यत्वम्, नतु स्वरूपतः सत्यत्वमित्येतन्निरूपणपरे विशदीक्रियते। सति चैवम्—नेदं रजतम्, अपितु शुक्तिकेतिवत नायं प्रपञ्चः किन्तु ब्रह्मैवेत्येव निरूपितप्रायम्; यदिदं राजतं सेयं शुक्तिकेतिवत्, यदिदं किञ्च तत्सत्यमित्याचक्षते इति विशदमाम्नानात्।

एतेन—नवा नेदं रजतम्' अपितु शक्तिकेतिवत् नायं प्रपञ्चः, किन्तु ब्रह्मेति बाध उपलभ्यत इत्यादि—परास्तम्।

तथाचाध्यारोपापवादस्थले दृश्यमानास्सर्वेऽशा अत्राप्युपलभ्यन्ते, इति कथं निर्विशेषब्रह्मवादस्याप्रामाणिकत्वम्? अध्यासाधिष्ठानत्वरूपस्यैवोपादानत्वस्य—"तस्माद्वा एतस्मादि'' त्यत्र विवक्षणात्, तस्य च ब्रह्मनिर्विशेषतां विनाऽसंभवात्।

एतेन—अध्यासाधिष्ठानत्वमुपादानत्वमिति तु स्वाभिमतार्थसाधनप्रत्याशया स्वनिर्मितमपूर्वमेव लक्षणमित्यादि—परास्तम्।

श्रुत्यर्थपौर्वापर्यस्वारस्यस्य लोकासिद्धत्वमात्रेण स्वकल्पितत्वाप्रामाणिकत्वादिव्यपदेशेन दूषणे भवदभिमतदिव्यमङ्गलविग्रहादिकल्पनाया अप्यप्रामाण्यापातेन सगुणब्रह्मणोऽप्यसिद्ध्यापत्त्या निर्विशेषब्रह्मवादखण्डनार्थं प्रवृत्ता भवन्तः कथं सगुणब्रह्मवादमपि न दूषयन्ति?

अयं भावः—"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे'' ति

परिणामवादाक्षेपानन्तरं प्रवृत्तेन "दृश्यते तु" इति सूत्रेण हि श्रुतौ ब्रह्मण उपादानकारणत्वस्य श्रवणाद् यथा तदुपपद्यते ब्रह्मण एव, तद्व्यवस्थापनीयमित्युक्तम्। इदं च ब्रह्मणो निरवयवस्यापि परिणामित्वाङ्गीकारेण यदि समर्थ्यते, तर्हि लोकविरोधः। यदि तु विवर्तोपादानत्वं शुक्त्यादौ दृष्टमादायैतत्समर्थ्यते, तर्हि तु न केवलं लोकाविरोधः, किन्तु लोकानुरोधोऽपि। अलौकिकत्वेऽपि विवर्तोपादानत्वस्य सगुणब्रह्मणो दिव्यमङ्गलविग्रहादेरिव नाश्रौतत्वकल्पनासंभवः॥

"जनिकर्तुः प्रकृतिरि"ति सूत्रसिद्धमुपादानत्वं तु परिणामि-विवर्तसाधारणं निर्वक्तुं शक्यत एव—कार्याधारत्वे सति कार्यजनिहेतुत्वम्, स्वात्मनि कार्यजनिहेतुत्वम्, स्वाभिन्नकार्यजनकत्वं वा, इति न विवर्तोपादाने पञ्चम्यनुपपत्तिः। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्त्यर्थं साध्यमानं प्रकृतित्वं ब्रह्मव्यतिरेकेण प्रपञ्चाभावसिद्धान्तं विना नोपपद्यते, इति विवर्तोपादानत्वमेवेति नियतमूरीकर्तव्यम्। कारणविज्ञानेन कार्यविज्ञानं गृहीत्वा खल्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा। इयं च ब्रह्मव्यतिरेकेण जीवादीनां केषामप्यभाव एव स्वरसा। सा च ब्रह्मण एव सर्वोपादानत्वेनैव निर्वहति, इति जीवादिसाधारणमुपादानत्वं विवर्तोपादानत्वमेव। अधिकं चात्र वक्तव्यं पूर्वमेव निरूपितम्।

एतेन—कार्याधारत्वे सति कार्यजनिहेतुत्वं नोपादानत्वमुभयसाधारणम्; कालादावतिव्याप्तेः, विलक्षणाधारत्वविवक्षणे च विशेष्यदलवैयर्थ्यात्। मृदादेर्भवन्मतरीत्या घटाद्याधारत्वाभावेन तत्राव्याप्तेः अज्ञान परिणामभूतजगदवस्थाधारत्वस्य ब्रह्मण्यसम्भवाद् असत्यस्य सत्याभेदस्य च लोकवेदव्यवहारविरुद्धत्वाच्चेत्यादि—परास्तम्।

घटे रूपमित्यादिप्रतीत्या तादात्म्यसम्बन्धस्यापि समवायादेरिव वृत्तिनियामकत्वात् तादात्म्यसम्बन्धेन कार्याधारत्वमेव कार्या-

धारत्वपदेन विवक्षितम्। अद्वैतमते कार्य-कारणयोर्मीमांसकमत इव तादात्म्यस्यैव स्वीकारात्, देश-कालयोस्तु कालिकविशेषणता-दैशिकविशेषणतासम्बन्धत एव घटाधारत्वं विवक्षितम्। अथवा कार्याधारत्वपदेन तादात्म्ये सतीत्येव विवक्षितम्, इति तादात्म्यसम्बन्धावच्छिन्नं कारणत्वमुपादानत्वमिति विवक्षितम्, इति देश-कालयोर्नातिव्याप्तिशङ्कापि। अनेन विशेष्यदलवैयर्थ्यमपि परिहृतं भवति; सम्बन्धान्तरेण कार्यजनिहेतुत्वमादाय निमित्तकारणादावतिव्याप्तिवारणेन तत्सार्थक्यात्, मृदादीनामप्यस्मन्मते परिणामिकारणत्वस्य स्वीकारात्। मृद् घट इति प्रतितेरस्मन्मतेप्यविशेषात् तादात्म्यसम्बन्धेनैव मृदादीनामपि कारणत्वाद् न मृदादावव्याप्तिः।

एतेन—ब्रह्मण्यव्याप्तिरपि—परिहृता; "सर्वं खल्विदं ब्रह्म" "सोऽकामयते" त्युपक्रम्य "सच्च त्यच्चाभवत्" इत्यादौ ब्रह्म-प्रपञ्चयोरपि तादात्म्यस्य श्रवणात् ब्रह्मकारणत्वस्यापि बहुश आम्नानात् लक्षणसम्बन्धोऽत्राप्यशिष्टः। इदं चोपादानत्वं ब्रह्मगतं विवर्तोपादानत्वं कार्यविषमसत्ताककारणत्वं कार्याध्यासनिबन्धनमेव, नतु परिणामनिबन्धनमित्यपि "सोऽकामयते" ति सन्दर्भ एव "सत्यं चानृतं च सत्यमभवत्" इति श्रुतिरिव प्रतिपादयति।

सति चैवमसत्यस्यापि सत्यकार्यता सत्याभेदश्च न वेदविरुद्धः। इदं रजतमित्यादौ लोकेऽपि सत्यस्यासत्याभेदादिकं विशदमेव। इदं च सत्यानृततादात्म्यमनिर्वचनीयख्यातिं विना न निर्वहति, इति सत्ख्यातिवादिनो भवन्तः केवलप्राकृतसिद्धान्तपक्षपातिनो वा न वस्तुतत्त्वपक्षपातिन इत्येव वक्तव्यम्। "यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" इति तु लोकवेदविरुद्धं न कोऽप्यन्योऽनुवदति। अख्यातिवादी प्रभाकरोऽपि न भवतां बहुमान्यः—यः खलु "यस्तु ब्रह्मविदामेष निश्चयो यदुपलभ्यते, न तत् तथ्यम्,

यन्नोपलभ्यते, तत् तथ्यमिति, नमस्तेभ्यः, विदुषां नोत्तरं वाच्यम्" इत्यादि वदन् अद्वैतवादमेव समादरणीयं मन्यते ।

यत्तु भवतां शुक्तिकायामेव रजतावयवा विद्यमाना एव रजत मुत्पादयन्ति, इति नीवारादिप्रतिनिधित्वव्यवस्थापकन्यायानुसारेण कल्पनम्, नेदं कस्यापि दार्शनिकस्य सम्मतम् । यथाच भ्रमज्ञानमपि मीमांसकानां नानभिमतम्, तथा प्राभाकरादिग्रन्थमूलशाबरभाष्य-सिद्धमित्याद्यन्यत्र विस्तृतम् । तथाच श्रोतानिर्वचनीयव्यवस्थाप-कानामनिर्वचनीयवादस्य स्वर्गादेरिवालौकिकत्वं भूषणमेव, न दूषणम्

एतेन—विवर्तोपादानत्वस्य श्रुति-स्मृति-सूत्रेषु क्वचिदपि कोणेऽनाघ्रात-तयोपादानद्वैविध्यस्यैव सगुण-निर्गुणब्रह्मद्वैविध्यवद् स्वेच्छामात्रपरिक-ल्पितत्वेनाप्रसिद्धत्वेन स्वात्मनि कार्यजनिहेतुत्वमित्यत्र स्वाभिन्नकार्य-जनकत्वमित्यत्र च स्वपदेन ब्रह्मग्रहणासंभवेन सूक्ष्मप्रपञ्चविशिष्टस्य ब्रह्मणः सूक्ष्मप्रपञ्चस्य वा कारणत्वेन प्रतिपन्नस्य ग्राह्यत्वाद्यंभाव इत्यादि—परास्तम् ।

यतो वा "इमानि भूतानि जायन्ते" इत्यादौ सूक्ष्मप्रपञ्च-विशिष्टस्यैव ग्रहणमिति हि नोभयसंप्रतिपन्नम् । सूक्ष्मप्रपञ्च-मात्रस्य ग्रहणे तस्यैव प्रकृतित्वात् प्रकृतिमात्रोपादानतावादस्यैव स्वीकारात् "ईक्षतेर्नाशब्दम्" "रचनानुपपत्तेश्च नानुमानमि" त्यादिसूत्रविरोधापत्तेः, "सर्वं खल्विदं ब्रह्म" त्यादौ ब्रह्मतादा-त्म्यव्यपदेशस्यासाङ्गत्यापत्तेः, पूर्वोक्तरीत्या ब्रह्मद्वैविध्यस्योपादानद्वै-विध्यस्य च प्रामाणिकत्वाच्च । तथाच स्वाभिन्नकार्यजनिहेतुत्व-रूपमुपादानत्वं ब्रह्मणि निरपोहमेव ।

अत्रेयं प्रकरणशुद्धिः—वाचस्पतिमते ब्रह्मैवोपादानम्, माया तु निमित्तमात्रमेव । मतान्तरे तु ब्रह्म विवर्तोपादानम्, माया परिणाम्युपादानम्, इत्युभयमप्युपादानम् । मतद्वयेऽपि स्वाभिन्न-कार्यजनिहेतुत्वं ब्रह्ममात्रे ब्रह्माज्ञानयोर्वाऽविशिष्टमेव । तत्र माया-

प्रपञ्चयोः समसत्ताकयोरभेदः, ब्रह्म-प्रपञ्चयोस्तु विषमसत्ताकयोरिति विशेषोऽद्वैतिभिरनुमन्यते। तथाच तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायस्य तदभिन्नाभिन्नयोः समसत्ताविषयत्वात नाज्ञान-ब्रह्मणोरभेदापत्तिः।

वस्तुतस्तु—तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायो येन रूपेण ययोरभेदः, तेन रूपेण तदभिन्नेनैव तस्याभेदं गोचरयति, यथा हेमरूपेण स्वर्णाभिन्नस्य कटकस्य हेमरूपेण कुण्डलाभेदात् कुण्डलस्यापि हेमाभिन्नत्वम्। तथाच हेम कटकमितिवत् कटकादुत्पन्नं कुण्डलमपि हेम कुण्डलमिति प्रतीयत इत्युपपन्नं तदभिन्नाभिन्नस्य तदभिन्नत्वम्। अन्यथा—कुण्डलाभिन्नहेमाभिन्नत्वात्, कटकस्य कुण्डलेनाप्यभेदापत्त्या कटकं कुण्डलमिति प्रतीतिरप्यापद्येत। इदमेवाभिप्रेत्योक्तम्—"कार्यात्मना तु नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा" इति। सति चैवमज्ञानाभेदः प्रपञ्चस्य येन जडत्वादिरूपेण, तेन रूपेण प्रपञ्चस्य न ब्रह्माभेदः, किन्तु सद्रूपेणैव, इति कथमज्ञानब्रह्मणोरभेदापत्तिः? वस्तुतस्तु तदभिन्नाभिन्नस्येति न्यायः परिणामि-परिणामयोरेव, न विवर्तमान-विवर्तयोरपि; अन्यथा हि शुक्त्यज्ञानयोरप्यभेदापत्तिः।

एतेन—घटादेरज्ञान-ब्रह्मोभयोपादानत्वे तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेनाज्ञान-ब्रह्मणोरभेदप्रसङ्ग इति—परास्तम्।

प्रपञ्चस्याज्ञानानुपादानकत्वमिति भामतीमते तु नोक्तायाः शङ्काया अवसरलेशोऽपि। यदि तु—घटादेरिवाज्ञानस्यापि ब्रह्मणि कल्पितत्वेन सद्रूपेण घट-ब्रह्मणोरिवाज्ञान-ब्रह्मणोरप्यभेद आपाद्यते, तर्हि इष्टमेवेदम्। तथाच घटादेरज्ञानोपादानकत्वे मतभेदेऽपि ब्रह्मोपादानकत्वे मतभेदाभावात् ब्रह्मोपादानकत्वे न कोऽपि दोषः प्रसज्यते, इति 'सन् घट' इत्यादिप्रतीतेर्घटादौ सत्तादात्म्यविषयकत्व-

मेव, मिथ्यात्वाविरोधि-व्यावहारिकप्रमाणसम्बन्धार्हत्वरूपसत्ताविषयकत्वमित्यद्वैतसिद्धान्तात् 'सन् घटः' इति प्रतीतिरेकसत्तावादेन सद्रूपब्रह्मतादात्म्यम्, अनेकसत्तावादेन व्यावहारिकसत्त्वं घटादौ विषयीकरोति—यथेदंतादात्म्याध्यासेन न रजत इदन्त्वप्रतीतिः। असन् घट इत्यादिप्रतीतिस्तु घटादिगतं सत्त्वाभावं गोचरयन्ती घटादीनां मिथ्यात्वमेव विषयीकरोति, न त्वसत्तादात्म्यं घट इत्यसदधिष्ठानकत्वापत्तिर्नावसरति ॥

सामानाधिकरण्यं हि—नीलो घट इत्यादौ विशेषण-विशेष्यभावनिबन्धनम्, यतो न नीलज्ञानबाध्यो घटः। इदं रजतमित्यादौ तु बाधानिबन्धनम्—यत इदंपदार्थशक्तिज्ञानबाध्यं रजतम्। तथाच सन् घट इत्यपि सद्रूपब्रह्मज्ञानबाध्यत्वेन घटस्य बाधायामेव सामानाधिकरण्यम्। असन् घट इति तु नेदं रजतमितिवत् बाधज्ञानमेव; अन्यथा—नेदं रजतमित्यनिदंतादात्म्यापन्नरजतविषयकमापद्येत। भ्रमज्ञाने यस्याधिष्ठानस्य भावरूपेण भानम्, बाधज्ञाने तस्य निषेधमुखेन ज्ञानमिति हि नेदं रजतमित्यादौ दृष्टम्। यदि तत्र नञः प्रसज्यप्रतिषेधत्वाद् नानिदंपदार्थस्य भानम्, तर्हि प्रकृतेऽपि असन् घट इति प्रतीतावकारस्य—"अ-मा-नो-ना निषेधोक्तौ" इति कोशात् सन् घटो न भवतीत्येव वाक्यार्थः, नासन् घट इति।

एतेन—सन् घट इत्यादौ सत्पदार्थस्य ब्रह्मस्वरूपात्मकस्य रजत इदम इव घटेऽनुवृत्त्या घटादौ सत्यत्वावगम इति चेत्, असन् घटः' 'असन् पटः' इत्यसतोऽपि तत्रानुवृत्त्या तस्य कुतोऽसत्त्वं नेष्यत इत्यादिशङ्कापि—परास्ता ॥

तथाच—"सत्यं ज्ञानमनन्तं ब्रह्म" "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुत्या ब्रह्मण एव बाध्यस्य सत्पदार्थत्वात् घटादेर्नश्वरस्य व्यभिचारेण सत्त्वान्वयासंभवात्, "अतोऽन्यदार्तम्" "नेह नानास्ति किञ्चने"त्यादिभिः स्वरसतो घटादिमिथ्यात्व-

बोधनस्यैव सांप्रतत्वाच्च सत्तादात्म्यमेव घटादौ भासते, न त्वबाध्यरूपं सत्त्वम्। अन्यादृशं तु सत्त्वं घटादेर्मिथ्यात्वाविरोधि भासमानं गृहीत्वा यद्यपि घटादेर्ब्रह्मतादात्म्येन सन् घट इति प्रतीतिः प्रमाणमिति वक्तुं शक्यम्; तथापि "सत्यं चानृतं च सत्यमभवदि"ति श्रुतिरत्र मानमिति तु नापह्नवमर्हति। तथाच यदि सत्तात्रैविध्यमतेन—"घटस्सन्" इति घटगतसत्त्वविषयकं ज्ञानम्, तर्हि "सत्यं चानृतं च सत्यमभवत्" इति श्रुत्या घटादेर्ब्रह्मतादात्म्येन ब्रह्मोपादानकत्वं पर्यवस्यति, न सन् घट इति प्रत्यक्षेणैव; तस्य विशेषण-विशेष्यभावनिबन्धनसामानाधिकरण्यविषयकत्वात्। एकसत्तावादेन तु सद्रूपब्रह्मतादात्म्यविषयकमेव 'सन् घटः' इति ज्ञानमिति न दोषः। नहि वयं सर्वं सामानाधिकरण्यं बाधानिबन्धनमेवेति वदामः, येन मृद् घट इत्यादौ घटगतमृत्त्वादिकमिव सन् घट इत्यत्र घटगतसत्त्वमेव विषयीकर्तव्यमिति स्यात्॥

अत एव परिणामिकार्ये परिणामिकारणधर्मोऽपि कार्यधर्मः; कार्य-कारणयोः समसत्ताकत्वात्, विवर्ते तु कारणतादात्म्यमेव कार्ये भासते, नतु कारणधर्म एव कार्यधर्मतयापि स्वीक्रियते। तदुक्तम्—"विषयस्य तु रूपेण समारोपो न रूपवान्" इति। अन्यथाऽऽकाश-जीवादीनामप्यनन्तत्व-सत्यकामत्वापहतपाप्मत्वादिप्रसङ्गाद् आकाशाधिकरणादिघटितः सर्वोऽपि समन्वयाध्यायः प्रायेण वितथः स्यात्। अयमत्र निष्कर्षः—सर्वात्मना ज्ञातं कारणं परिणामिकारणम्, नतु किञ्चिद्रूपेणाज्ञातं किञ्चिद्रूपेण ज्ञातं च कारणं परिणामिकारणम्, विवर्तकारणं तु तद्विपरीतम्; इदंरूपेण ज्ञातस्य शुक्तित्वरूपेणाज्ञातस्यैवेदंपदार्थस्य विवर्तोपादानत्वात्। तथाच सर्वात्मना ब्रह्मज्ञाने कारणत्वमेव बाधितम्, इति ब्रह्म जगत् इति मृद् घट इतिवद् न प्रतीत्यापत्तिः।

एतेन—परिणामे दृष्टस्य विवर्ते न वर्णनं संभवति। ब्रह्मकार्यत्वे हि ब्रह्म घट इति प्रतीतेरिव सन् घट इति प्रतीतेरसंभवः। नहि रजत-

मध्यस्थत: पुंस: इदं रजतमितिवत् शुक्ती रजतमिति प्रतीति: संभवती-त्यादि—परास्तम्।

सद्रूपेण ज्ञातस्याप्यानन्दरूपेणाज्ञातत्वावस्थायामेव हि सन् घट इति प्रतीतिः। तथाच—यथा शुक्तो रजतमिति बाधायां सामानाधिकरण्यम्, न तथा सन् घट इति बाधायां सामानाधिकरण्यमेव। इयान् विशेषः—शुक्तो रजतमिति ज्ञानं शुक्तित्वांशस्यापि ज्ञानात् बाधज्ञानम्, सन् घट इति तु सर्वात्मना सद्रूपस्याज्ञातत्वात् न बाधज्ञानम्। सन् घट इति न बाधज्ञानाकारः, परमार्थगत्या तु बाधज्ञानमेवेति तु वस्तुस्थितिः।

'इदं रजतम्' इति वाक्यं हि सामान्यरूपेण विशेषरूपेण वा शुक्तिं जानन्तं यः सर्वदा शुक्तिं रजतत्वेनैव गृह्णाति, तं प्रति शुक्तिज्ञापनाय प्रयुज्यते, यदा शुक्तिस्वरूपप्रश्नः, तदा हि—इदं रजतं शुक्तिः इति वाक्यार्थः सिद्धो भवति। यदिदं रजतमभवात् सेयं शुक्तिरिति तु निष्कृष्टार्थः। अत्र 'इदं रजतं शुक्तिरि'ति व्यवहार इदं रजतमिति व्यवहारो मुख्यवृत्त्या शुक्तिस्वरूपं ज्ञापयितुं न शक्नोति, इति नेदं रजतम्, किन्तु शुक्तिरिति रजतनिषेधमुखेन शुक्तिस्वरूपज्ञापने परम्परया तस्योपयोगोऽङ्गीकरणीयः, एवमेव 'सन् घटः' इत्यादिवाक्यं मुख्यविधया ब्रह्मबोधनासमर्थं परम्परया निषेधमुखेन ब्रह्म बोधयतीति न कोऽपि विरोधः।

एतेन—"नहि लोके—'इदं रजतमि'ति व्यवहारः शुक्तिस्वप्राप्त्य-पेक्षया प्रवृत्तो दृश्यते; एवं दार्ष्टान्तिकेऽपि 'सन् घटः' इत्यादिव्यवहारो नाखण्डाकारप्राप्त्यपेक्षया प्रवृत्तो दृश्यते, इति "इदं रजतम्' 'सन् घटः' इति व्यवहारयोरद्वैत्यभिमतदृष्टान्तदार्ष्टान्तिकभावायोग इत्यादिकमपि—परास्तम्।

अत्राऽप्राप्य निवर्तन्ते इत्यनेन तदविषयीकरणेन ततो निवृत्तिरेव प्रतीयते, नतु "देवदत्तस्तटाकपर्यन्तमगत्वा तटाके सलिलं

नास्तीति केनचिदुक्ते निवर्तत इत्युक्ते प्रवृत्तेस्तटाकपर्यन्तगोचरत्वं मध्ये तत्रापेक्षिताभावज्ञाने निवृत्तिश्च यथा प्रतीयते, तद्वत् प्रकृते सन् घट इति व्यवहारप्रवृत्तेरखण्डाकारपर्यन्तगोचरत्वम्—"अथात आदेशो नेति नेति" इति निषेधशास्त्रेण तदभावज्ञाने तदप्राप्य मध्ये निवृत्तिश्च प्रतीयत इति परकल्पितप्रणाल्या सिद्धा प्राप्तिपूर्विका निवृत्तिः। येन व्यवहारप्रवृत्तेरखण्डाकारगोचरपर्यन्तत्वस्याभवादित्यनुक्तोपालम्भनानामवकाशः स्यात्। तथाच सर्वाणि सगुणवाक्यानि ब्रह्मस्वरूपबोधनार्थं प्रवृत्तान्यपि न पारमार्थिकं ब्रह्मस्वरसतो बोधयितुं समर्थानि, किन्तु कथंचन तटस्थलक्षणविधया सेयं शुक्तिः, यदिदं रजतम्" इत्यादिवाक्यानीवेतरनिषेधमुखेनैव बोधयितुं समर्थानीत्येवात्र तात्पर्यार्थः।

एतेन—अप्राप्येति अद्वैताभिमतं तद्व्याख्यानं वा सर्वथाऽसङ्गतमिति—परास्तम्।

सन्घट इत्यादिव्यवहारो हि घटतादात्म्यापन्नं ब्रह्म ब्रह्मतादात्म्यापन्नं घटादिकं वा विषयीकुर्वन् न ब्रह्मस्वरूपमात्रविषयीकरणसमर्थम्, अखण्डस्य ब्रह्मणो निर्विकल्पकज्ञानमात्रावेद्यत्वेन सन् घट इत्यादिसविकल्पकज्ञानावेद्यत्वात्।

एतेन—सन् घट इति व्यवहारस्य ब्रह्मण्यध्यस्तप्रपञ्चतादात्म्योल्लेखित्वकथनमसङ्गतम्; तथासति ब्रह्मवाचकसत्पदप्रयोगायोगात्। तस्य तद्वाचकत्वं हि त्वदभिमतम्। नचाध्यासस्थले तत्प्रयोग उपपद्यते, भ्रमोपमर्दप्रसङ्गस्योक्तत्वात्। अतः प्रमाविषयत्वादिरूपसत्ताधर्माश्रयो घट इत्येव सन् घटः इत्यत्र बोध इत्यादिकम्—अपास्तम्; सद्रूपेण ज्ञातस्यानन्दरूपेण ज्ञातस्य च ब्रह्मण एव घटाद्यधिष्ठानत्वेन सत्पदेन ब्रह्मविवक्षायामपि हि नाध्यासविरोधः; अखण्डब्रह्मणोऽनावृतस्यैव भ्रमविरोधित्वम्, नतु सखण्डस्यावृतस्यापीति हि वस्तुस्थितिः। इयमेव रीतिः शुक्तिरजतभ्रम-

स्थलेऽपि दृष्टा, यत्र शुक्तिकाया इदन्त्वेन ज्ञानं शुक्तित्वेनाज्ञानं च विना न भ्रम उदेति। यथाच शुक्तिकायाः यावद्ब्रह्मसाक्षात्कारमनुवर्तमानायाः कल्पितेनैव स्वरूपेणावस्थानं सविशेषरूपेण, एवं ब्रह्मणोऽपि परमार्थगत्या निर्विशेषस्यापि यावदखण्डाकारसाक्षात्कारं कल्पितास्सविशेषाकारा बहव एव वर्तन्ते, इति सत्त्व-चित्त्वानन्दत्वादीनां कल्पितेन विशेषेण ब्रह्मधर्मत्वाविरोधाद् काल्पनिकाकारमादाय निर्वाहसंभवः। तत्र यथा शुक्तित्वेन ज्ञातायाः शुक्तेरेव रजतभ्रमविरोधित्वेनाधिष्ठानत्वव्यपदेशः, न त्विदंपदार्थस्य सर्पादिभ्रमसाधारणस्य, तथा प्रकृतेऽपि—अखण्डब्रह्मसाक्षात्कारस्यैव सर्वप्रपञ्चभ्रमविरोधित्वाद् अखण्डब्रह्मणो निर्विशेषस्यैवाधिष्ठानत्वम्, नतु सत्पदार्थस्य ब्रह्मणः, स्वनिवर्तकज्ञानविषयस्यैवाधिष्ठानत्वादिति ह्यद्वैतिनां प्रक्रिया।

एतेन—काल्पनिकाकारमादाय तु न विवादः; निर्विशेषब्रह्मण एव घटपटाद्यनुगतत्वस्याद्वैतिभिः स्वीकारादित्यादि—परास्तम्; निर्विशेषस्य ब्रह्मण एव सदात्मना कल्पितेन घटाद्यनुगतिस्वीकारेऽपि पारमार्थिकनिर्विशेषत्वाविघातात्।

'निर्विशेषेण सर्वविकारानुगतेन सच्चिदानन्दरूपस्य ब्रह्मणः प्रपञ्चे तादात्म्यमि' ति पूर्वाचार्याणामुक्तिस्तु वस्तुगतिमनुरुध्यैव; नतु सन् घट इति व्यवहारदशायामपि निर्विशेषस्याखण्डस्यैव सन्पदेन भानमनुरुध्य। सन् घट इति हि व्यवहारो यावद्घटादिप्रतीति नियतमनुवर्तेत. इति युक्तमाम्नातम्—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे" ति। अनेन हि वाक्येन व्यवहारदशायां वाचामखण्डसन्मात्रविषयकत्वमेव निवार्यते, नतु सन् घट इत्यादिव्यवहारमात्रम्, "घटादिव्यवहाराणाम्"—अथात आदेशो- नेति नेति" इति श्रुत्या बाधे व्यवहार्याभावादेव निवृत्तिर्भविष्यति, इति नास्य वाक्यस्य किञ्चित् प्रयोजनमिति शङ्का सावसरा

स्यात्। तदयं निष्कर्षः—यथा इदं रजतमिति व्यवहारो शुक्तिं शुक्तित्वेनाविषयीकृत्य ततो निवर्तते, तथा सन् घट इति व्यवहारोऽपि निर्विशेषं ब्रह्माविषयीकृत्य ततो निवर्तते।

इदमेवात्रालोचनीयम्—यत् कथं वाङ्मनसागोचरत्वं ब्रह्मणः, यदि सगुणं ब्रह्म प्रकरणार्थः स्यात्? वयं तु प्रतीमः—ब्रह्मनिर्विशेषनाव्यवस्थापनार्थत्वादस्य वाक्यसन्दर्भस्य निर्विशेषे चाज्ञाननिवृत्तिव्यतिरेकेण परस्य कार्यस्यानपेक्षणात् सर्वाणि प्रमाणानि घटादीनामिव न प्रमेयत्वमप्यात्मन आपादयन्तीति बोधनार्थमेवैतावान् वाक्यसन्दर्भः। सति चैवं ब्रह्मणि सृष्टिवाक्येन पूर्वतनेनाध्यारोपितस्य प्रपञ्चस्यापवाद एव "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।" इत्यादिवाक्यार्थः। अत एव—द्वितीयाद्वै भयं भवती"त्यादिना द्वितीयदर्शनफलभयनिवृत्तिफलेनोपसंहार उपपद्यते। अयं ह्युपसंहारो ब्रह्मणोऽत्र वाक्येऽद्वतीयत्वतात्पर्यं विना नोपपद्यते।

एतेन—उपक्रमानुरोधात् प्रकरणगततत्तद्वाक्यपरामर्शाद् उपरितनवाक्यानुगुण्यात्, श्रुत्यन्तरैकार्थ्याच्च—आनन्देयत्तारूपं पारमप्राप्यानन्दात् वाचो मनसा सह निवर्तन्त इत्यर्थपरत्वमेव "यतो वाचो निवर्तन्ते" इत्यादि वाक्यार्थः, न तु ब्रह्मण्यध्यारोपितप्रपञ्चापवादपरतेत्यादि—परास्तम्।

एतदुक्तं भवति—ब्रह्मवाक्यानि हि सर्वाणि 'सन् घटः' "सर्वं खल्विदं ब्रह्मे" त्यादीनि नाखण्डं ब्रह्म गोचरयन्ति, यतः सद्रूपेण ज्ञातमानन्दरूपेणाज्ञातमेव ब्रह्म पूर्वोक्तविधया कारणं मन्यते, यस्य कारणवाक्येषु सन् घट इत्यादिलौकिकव्यवहारे च भानं भवति। तथाचानन्दात्मनाऽपि ज्ञानं यद् अपेक्षितम्, तदिदमनानन्दतापादकाज्ञाननिवृत्तिं विना न संभवति। सा च "अथात आदेशो नेति नेति" इतीतरनिषेधमुखेन स्वस्वरूपज्ञानमात्राधीना, इति

वेदान्तवाक्यानीतरनिषेधार्थान्येव, नात्मस्वरूपार्थानि; स्वप्रकाशत्वात् स्वस्वरूपस्य। इदमेवाभिप्रेत्योक्तमाकरे—"नहि शास्त्रमिदन्तया ब्रह्म प्रतिपादयति; अविद्यानिवृत्तिपरत्वाद् शास्त्रस्ये"ति॥

सन्मात्रावगतिर्हि निर्विकल्पज्ञानं न विकल्पमुखेन प्रवर्तमाना वाचो मुख्यवृत्त्या जनयन्ति, न वा शास्त्राचार्योपदेशासंस्कृतं मनः; सविकल्पकज्ञानजनकत्वाद् प्रायेण मुख्यया वृत्त्या शब्दानां मनसश्च। तथाच ब्रह्मणो वाङ्मनसागोचरत्वप्रतिपादनपरमिदं वाक्यजातं ब्रह्मणि सजातीय-विजातीय-स्वगतभेदराहित्यबोधनार्थमेव प्रवृत्तमित्यकामैरपि स्वीकरणीयम्॥

सति चैवम्—'इदं रजतमि'ति सविकल्पज्ञानं तादृशव्यवहारो वा यथा रजताधिष्ठानशुक्तिस्वरूपमात्रं न विषयीकरोति; सत्यानृतमिथुनीकरणरूपत्वात् तस्य, तथा सन् घट इत्यादिव्यवहारा अपि घटाद्यधिष्ठानं सद्रूपं ब्रह्ममात्रं न गोचरयन्ति। शुक्तित्वाज्ञानदशायां हि जायमानः—"इदं रजतम्" इति व्यवहारो वस्तुगत्या रजततादात्म्यापन्नेदंपदार्थस्य शुक्तित्वेऽपि शुक्तिरेव रजतमिति न विषयीकरोतीति सर्वसम्मतमिदम्; अधिष्ठानगतासाधारणधर्मज्ञानस्य तद्विरुद्धधर्मारोपात्मकभ्रमविरोधित्वात्। एवं सृष्टिवाक्यानि सन् घट इत्यादिव्यवहारा वा सत्पदार्थस्य वस्तुगत्या ब्रह्मत्वेऽपि नाखण्डं ब्रह्म गोचरयन्ति; सद्वितीयताज्ञानस्याखण्डज्ञानविरोधित्वात। तथाच—'इदं रजतमि'ति व्यवहारो यथा शुक्तित्वमप्राप्य निवर्तते, एवं सन् घट इत्यादिव्यवहारा अपि यदखण्डानन्दरूपं ब्रह्म, तदप्राप्य निवर्तन्ते, इति सुष्ठु दृष्टान्त-दार्ष्टान्तिकभावो लगति। यथा—शुक्तित्वज्ञाने सति नेदं रजतमिति बाधो दृश्यते, एवमत्राप्यखण्डानन्दरूपब्रह्मज्ञाने सति न सन् घट इति बाधो भवितेति तु पारमार्थिको भावः। अनेन च प्रपञ्चापवादोऽप्यर्थसिद्धो भवतीति तु हृदयम्॥

एतेन—शुक्तौ रजतमिति ज्ञानस्य बाधायां सामानाधिकरण्ये तुल्य-न्यायेन सन् घट इत्यपि शुक्तौ रजतमिति ज्ञानवत् बाधज्ञानमेव स्यादि-त्यादि—निरस्तम्।

नहि सति घटादेः कल्पनां विना बाध्यस्य घटादेस्सद्रूपेण प्रतीतिः संभवति। तथाच सत्त्वं न घटादेर्धर्मः, किन्तु सत्तादात्म्य-मेव घटादेः स्वीक्रियते, इति घटाद्यध्यासाधिष्ठानमद्वयं ब्रह्म घटा-दीनां विवर्तोपादानमित्येव स्वीकर्तव्यम्। "आत्मनः आकाशः संभूतः" इत्यादौ श्रुतौ पञ्चम्या आत्मन उपादानत्वस्य प्रतीतेः, "जनिकर्तुः प्रकृतिरि"ति ततः पञ्चम्या विधानात्। उपादानत्वं च घटादिनिरूपितं ब्रह्मणः पूर्वोक्तप्रकारेण तदध्यासाधिष्ठानत्वरूपमेव।

सति चैवम्—"आत्मन आकाशस्संभूतः" इति श्रुत्या पञ्चम्यैवाकाशादिकं ब्रह्मण्यध्यस्तमिति ज्ञायते।

एतेन—"आत्मन आकाशस्संभूतः" इति वचनव्यक्तौ केनोपाये-नात्मन्यकाशाध्यारोप इत्यर्थः संपद्यते इत्यादि शङ्कापि—निरवसरा।

"यतो वाचो निवर्तन्ते" अप्राप्य मनसा सह इति श्रुत्यैव ब्रह्मणो वाङ्मनसागोचरत्वप्रतिपादनद्वारा ब्रह्मणो निर्विशेषत्वस्य सूचनेन कारणवाक्यप्राप्तस्य सप्रपञ्चत्वस्य बाधसूचनेन ततोऽप्याका-शादेरात्मन्यध्यारोपप्रतिपत्तेश्च। सत्यं सप्रपञ्चत्वं प्रथमतोऽवगतमुप-क्रमाधिकरणन्यायेन यथाश्रुतार्थमिति प्रतीयते; तथापि विधि-नि-षेधरूपेण प्रवृत्तयोरुपक्रमोपसंहारयोरुपसंहारस्योपक्रमबाधेनैव प्रामा-ण्यस्य स्वीकर्तव्यत्वात् "पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्" इति रीत्याऽपच्छेद-न्यायेनोपसंहारप्राबल्यस्यैवात्र विवक्षितत्वाद् नोपक्रमाधिकरण-न्यायस्यात्र प्रसङ्गः।

"तस्माद्वा एतस्मात्" इत्यनेन यद्यप्याकाशकारणत्वमेव ब्रह्मणोऽवगम्यते, न वाय्वादिकारणत्वम्; वाय्वादेराकाशादिकार-

णकत्वस्य प्रतिपादनात्, इति वाय्वादीनां ब्रह्मण्यध्यस्तत्वं न संभवदुक्तिकम्; तथापि "एतेन मातरिश्वा व्याख्यातः" "तेजोऽतस्तथाह्याह हि" "आपः" "पृथिव्यधिकाररूपशब्दान्तरेभ्यः" "तदभिध्यानादेव तु तल्लिङ्गात् सः" इत्यादिषु स्थलेषु वाय्वादीनामप्याकाशाधिष्ठितब्रह्मकार्यत्वं स्थापितमेवेति न कोऽपि विरोधः।

एतेन—प्रथमान्ताः पञ्चम्यन्ताश्चाकाशवाय्वादिशब्दाः अध्यस्ताकाशादिमात्रपराः, उताकाशभावापन्नब्रह्मबोधकाः? आद्ये ब्रह्मण आकाशाधिष्ठानतामात्रं सिद्ध्यति, न वाय्वाद्यधिष्ठानत्वम्, तस्याकाशादेव प्रतीतेः। अन्त्येऽपि किं ब्रह्मण आकाशादिभावापत्तिराकाशादिरूपेण परिणामः, उत तदात्मतयाऽवस्थानम्? अथवा तदनुगतत्वमात्रम्। न प्रथमः; "सत्यं ज्ञानमि"ति निर्विकारत्वश्रुतिविरोधात्, आकाशादेरपि ब्रह्मपरिणामस्य ब्रह्मवत्सत्यत्वापत्तेश्च। न द्वितीयः; त्वत्पक्षे शुक्तिकायां रजतस्येव ब्रह्मण्याकाशादीनामध्यस्तत्वेन रजतं प्रति शुक्तिकाया इवाकाशादिकं प्रति ब्रह्मण आत्मत्वायोगः। नहि रजतस्यात्मभूता शुक्तिरिति कश्चित् प्रत्येति, अपि तु सादृश्यात् शुक्तिं रजततया भ्राम्यतीत्यादि—परास्तम्; प्रथमान्ताकाशादादिशब्दानामध्यस्ताकाशपरत्वस्य पञ्चम्यन्ताकाशादिशब्दानामाकाशाद्यभिन्नात्मपरत्वस्य च स्वीकारे कस्यापि दोषस्याप्रसरात्।

अयं भावः—"आत्मन आकाशः संभूतः" इत्यनेनाकाशस्यात्माधिष्ठानकत्वं सिद्ध्यति; प्रथमान्ताकाशपदेनात्मतादात्म्ययोग्याकाशमात्रस्य बोधनेऽपि पर्यवसितबोधेनात्मतादात्म्यापन्नाकाशस्यैव बोधनेन केवलस्याकाशस्य न पर्यवसितबोधविषयत्वम्। यथा—शुक्तिकायां रजतमात्रस्याध्यासेऽपि 'इदं रजतमिति' प्रतीत्या शुक्तितादात्म्यापन्नमेव रजतं प्रतीयते। तत्र च परस्पराध्यासमहिम्ना शुक्तितादात्म्यापन्नरजतं रजततादात्म्यापन्ना शुक्तिका च यथा प्रतीयते, एवमात्मतादात्म्यापन्नाकाशस्यैवाकाशतादात्म्यापन्नात्मनोऽपि पर्यवसितबोधः फलति। सति चैवम् "आकाशाद्वायुरि"त्याकाशपदेनाप्यात्मतादात्म्यापन्नाकाशो वाऽऽकाशतादात्म्यापन्नात्मस्वरूपं वा प्रतीयत इति वक्तव्यम्। तथाच—"तस्माद्वा

एतस्मादात्मनः इत्यस्याकाशात वायोरग्नेः पृथिव्या औषधीभ्य इत्यदिपञ्चम्यन्तैस्सर्वैरप्यनुकृष्य सम्बन्धः स्वीकर्तव्य इत्यभिप्रेत्यैव– "एतेन मातरिश्वा व्याख्यातः" इत्यादिसूत्राणि प्रवृत्तानि। सति चैवम् 'हेम्नः कटकम्' कटकात् कुण्डलमित्यादिव्यवहारेऽपि कुण्डलादिनां हेमैव यथोपादानम् नतु कटकम्, एवमत्राप्याकाशाद्वायुरित्यादीनामाकाशतादात्म्यापन्नादात्मनो वायुः, एवं वायुतादात्म्यापन्नादात्मन इत्येवं क्रमेणैवान्वयः सिद्ध्यति, नतु केवलादाकाशादित्यादिरूपेण। शुक्तिकायां रजतभ्रमानन्तरं बाधज्ञानात् पूर्वं शुक्तिकावाचकशब्देन रजतस्येव तस्य रजतशब्देनापि वस्तुगत्या शुक्तिया एव प्रतीतिरित्यनुभवाद् न किमप्यनुपपन्नम्। ब्रह्मण आकाशाद्यात्मना भानमेवाकाशादिभावः; आकाशादेर्ब्रह्मविवर्तत्वादोकाशात् न त्वाकाशात्मना परिणामः। तथाचाकाशादिकारणत्वेऽप्यात्मनो न निर्विकारत्वश्रुतिविरोधः। व्यक्तं चैतत् कृत्स्नप्रसक्त्यधिकरणे---"दृश्यते तु" इति सूत्रे। तेन नाकाशादिनित्यत्वापातः, तदात्मना भानं तद्विवर्तोपादानत्वमित्येकसत्तावादेन दृष्टिसृष्टिवादेन वा; मतान्तरे तु तदात्मतयाऽवस्थानमेव तद्विवर्तोपादानत्वम्। दृश्यते हि शुक्तिकात्मनावस्थानं रजतस्य भ्रमकाले; इदं रजतमिति तादात्म्यव्यवहारात्।

सादृश्यात् शुक्तिं रजततया भ्राम्यतीति तु नामान्तरेण शुक्ती रजतात्मना भात्यवतिष्ठते वा भ्रमकाल इत्येव; सादृश्यायोनभ्रमस्यानिर्वचनीयख्यातिदृष्ट्याऽधिष्ठानात्मनाऽरोप्यभानरूपत्वात्। सर्वमिदमभिप्रेत्यैवोक्तं कल्पतरौ तेजोऽधिकरणे-- "ब्रह्म-वाय्वोरभेदाभिधानं वायौ कारणत्वेनानुगतं यद् ब्रह्मस्वरूपं तदभिप्रायम्, नतु विकाराद्यभिप्रायम्; अध्यस्तस्य तात्त्विकब्रह्माभेदायोगादि"ति। अत एव हि—इदं रजतमित्यादौ तादात्म्येनेदंपदार्थस्येव नियमेन सन् घट इति घटादितादात्म्यस्य सद्रूपस्य ब्रह्मणो घटाद्यनुगततया

प्रतीतिरुपपद्यते। तदनुगतत्वं नाम तादात्म्यसम्बन्धेन तत्प्रकारकधीविशेष्यत्वमेव, नतु परिणामिविवर्तकारणोभयसाधारणम्, तत्सम्बन्धितया प्रतीयमानधमवत्त्वमात्मपरिणामिकारणासाधारणम्।

एतेन—अध्यासपक्षे घटादौ मृद्रूपस्येव वाय्यादौ ब्रह्मरूपानुवृत्तिरूपानुगमायोगादित्यादि—परास्तम्; पूर्वोक्तस्यानुगमस्य तादात्म्यप्रतीतिमात्रेण निर्वाहात्। अस्ति हि—रजते शुक्तिकाया अप्यनुगमः, इदं रजतमितीदंतादात्म्यविषयत्वात्। तथाच सकलचेतनाचेतनप्रपञ्चविवर्ताधिष्ठानं सवविकारानुगतं निर्विशेषचैतन्यमेव तेन तेनाकाशादिरूपेण वाय्वादीनामुपादानमिति निष्कर्षः। अधिकं कल्पतरुपरिमाले व्यक्तम्।

यथाचाहमज्ञ इति प्रतीतिरज्ञानान्तःकरणयोरेकचैतन्य एवाध्यासेऽप्येकत्र द्वयमिति रीत्या भवति, एवमाकाश-वाय्वाद्यवच्छिन्नस्य चैतन्यस्यैकत्वेऽपि चैतन्यांशस्यैवोपादानत्वादधिष्ठानत्वाद्वाऽऽकाशाद्वायुरित्यादिकमुपपन्नम्। तथाचाकाशादिकं तदवच्छिन्नं विशिष्टं चैतन्यं वा न वाय्वाद्युपादानम्, येन—"आकाशात्मकविकारस्य तदवच्छिन्नचैतन्यस्य वा ब्रह्मणो न वायूपादानत्वम्; तयोः कल्पितत्वेनाध्यासाधिष्ठानत्वायोगात्" इति शङ्का सावसरा स्यात्, इत्याकाशाद्यनुगतचैतन्यमात्रस्य निर्विशेषस्यैकस्यैव ब्रह्मण आकाशादिसर्वविकाराध्यासाधिष्ठानत्वं फलति। सति चैवं ब्रह्मत एवेदं सर्वम्, "सर्वं खल्विदं ब्रह्मे"ति वैकोक्त्या सर्वाधिष्ठानं ब्रह्मेत्येवोक्तं भवति। अत एव—"आत्मन एवेदं सर्वम्""सर्वं खल्विदं ब्रह्म" "यतो वा इमानि भूतानि जायन्ते""यः सर्वज्ञः सर्ववित्। तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" इत्याद्येकोक्त्या सर्वकारणत्वेन ब्रह्मोपदेशपराणि वचनान्तराण्युपपद्यन्ते। "आकाशाद्वायुर्वायोरग्निरग्नेरापः" इत्युक्तिरतिसूक्ष्मं क्रमविशेषमपि सूचयति। तस्य च प्रयोजनं शुक्त्यवच्छिन्नस्य चैतन्यस्येव तदाश्रिताविद्याया एव वा रजतकारणत्वेऽपि शुक्तेरप्यध्यासाधा-

रत्वात् शुक्तितादात्म्यमिव रजतस्याकाशादितादात्म्यमपि वाय्वा-देरार्थिकमिति सूचनमेव, येनाकाशादिधर्माणां शब्दादीनां वाय्वादौ समावेशोऽप्युपपद्यते।

एतेन—आत्मनः सर्वमित्येकोक्त्यैव सर्वसामञ्जस्येन—"आकाशाद्वायुर्वायोरग्निः" इत्येवंरीत्या वचनप्रवृत्तिरद्वैतमते निर्विशेषचैतन्यस्यैकस्यैव सर्वविकाराध्यासाधिष्ठानत्वस्य फलिततया व्यर्थैव स्यादिति —अपास्तम्।

उभयावच्छिन्नचैतन्यस्यैक्येनोभयोरपि तादात्म्ये न कोऽपि विरोध इति तु विवरणाद्यभिमतो मार्गः।

भामतीसम्मतस्तु मार्गः—आकाशादीनां सर्वेषां केवलाविद्योपहितब्रह्मकार्यत्वमेव। माया हि नोपादानम्, किन्तु निमित्तकारणमेव। जडत्वादिकं घटादेर्घटत्वादिकमिव तस्यैवासाधारणो धर्मः, न कारणधर्मः। सत्तादात्म्यमेव हि कार्य-कारणभावनिबन्धमिति यत्र मते स्वीक्रियते, सोऽयम्—वाय्वादीनां शब्दादिगुणकत्वं स्वत एव, न त्वाकाशादिधर्म इति सिद्धान्तात् कारणे ब्रह्मणि सर्वेषामुत्पत्तिप्रदर्शन एव तात्पर्ये न दोषलेशस्यापि संभव इति।

अस्तु वाऽऽकाशावच्छिन्नं चैतन्यमेव वाय्वाद्युपादानम्, तत्राप्युपादानत्वं चैतन्यांशस्य विवर्तोपादानत्वम्, आकाशादेः परिणाम्युपादानत्वम्; अज्ञानावस्थाविशेषस्यैवाकाशत्वात्। तथाचाकाशाद्यात्मनाऽवस्थाज्ञानेनावृतं ब्रह्म वाय्वादिकारणमित्येव सिद्धान्तादवस्थाज्ञानसादित्वपक्षमादायाकाशादिपरिणामो वाय्वादिरिति स्वीकारेऽपि न तस्य ब्रह्मकार्यत्वविरोधः। अस्मिंश्च पक्षे "आकाशाद्वायुरि"ति सृष्टिक्रमः कुत्रचनात्मत एवेदं सर्वमिति सृष्टियौगपद्यं सर्वमुपपद्यते। अनवच्छिन्नं चैतन्यमेव मूलाज्ञानावच्छिन्नं सदाकाशकारणम्, अवस्थाज्ञानावच्छिन्नं तु वाय्वादिकारणमिति तु निष्कर्षः। तथाचात्र पक्षे कल्पितस्याधिष्ठानत्वायोग

इति प्रश्नस्य नावसरलेशोऽपि। न ह्यविद्यासम्बन्धेन तदावरणेन वा ब्रह्मणो विकार्यत्वापातः।

एतेन—विकारानुगतत्वमपि—व्याख्यातम्; तत्तदसाधारणावस्थाविशेषसम्बन्धस्यैव विकारानुगमरूपत्वात्। तथाच-निर्विशेषचैतन्यस्यैव मूलाज्ञानावृतस्यैव तत्तदवस्थाज्ञानेनाप्यावरणाद् अविद्यावस्थाविशेषोपहितब्रह्मणः कारणत्वमपि निर्विशेषकारणतायामेव पर्यवस्यति। सति चैवम्—"ब्रह्म-वाय्वोरभेदाभिधानं वायौ कारणत्वेनानुगतं यद् ब्रह्म तदभिप्रायमि"ति कल्पतरुवाक्यमप्युपपन्नमेव। तथाच सर्वेषां ब्रह्मकार्यत्वाविशेषेऽप्याकाशादिकार्यत्वमपि वाय्वादेरूरीकर्तव्यमेव।

एतेन—सर्वथाऽऽकाशादिम्बन्धाभावे वाय्वादिकारणस्य चैतन्यस्य वाय्वाद्यनुगतब्रह्मणोऽप्याकाशोत्पत्तिर्वक्तव्या स्यात्; असम्बन्धसाम्यात्। अत आकाशादिसम्बद्धस्यैव ब्रह्मणो वाय्वादिकारणत्वमूरीकर्तव्यम्। अत एव तेजोधिकरणभाष्ये भगवत्पादकृतेऽपि वायोरूर्ध्वमग्निरुत्पद्यत इत्यर्थपरत्वं पूर्वपक्षयित्वा तत्परिहारेण केवलब्रह्मणः सर्वोपादानत्वानङ्गीकारेणैव समाहितम्; अन्यथा तद्विरोधापत्तिरिति—व्याख्यातम्; अनुपदोक्तमतरीत्याऽऽकाशादिसम्बद्धस्यैव कारणत्वेऽपि निर्विशेषचैतन्योपादानतापक्षाविरोधात।

यथाच—"तच्च वायुविकारानुगतस्य ब्रह्मणोऽधिष्ठानत्व एवोपपद्यते, न विकारान्तरानुगतस्य केवलस्य वे"ति परिमलोक्तिरपि—व्याख्याता; अत्र केवलस्यानुपादानत्वाभिधानम् अविद्यासम्बन्धाभावेन ब्रह्मणो विवर्तोपादानत्वमिति सिद्धान्तात् तत्तदवस्थाज्ञानोपहितस्यैव ब्रह्मणस्तत्तदवान्तरकार्यकारणत्वमिति सूचनार्थम्, नतु चैतन्यांशस्यैव निर्विशेषस्योपादानत्वमित्येतदर्थनिरासार्थमपि।

एतेन—विकारावच्छिन्नस्यैव तदनुगतस्यापि तत्सम्बन्धाभ्युपगमस्यावश्यकतयाऽद्वैतमतरीत्या तस्य काल्पनिकत्वावश्यंभावेनाध्यस्त-

स्याधिष्ठानत्वायोग इति तदुक्त्यनुसारेणाप्यधिष्ठानत्वासंभव इति—परास्तम्; अनुक्तोपालम्भनत्वात् ।

'इदं रजतमि'त्यादौ रजत इदंतादात्म्याध्यासं प्रत्यपीदमंशाज्ञानमेव कारणम्, न प्रातिभासिकरजताज्ञानम्; तस्याप्रसक्तेरिति वदद्भिर्गुरुचन्द्रिकाकारैः प्रातिभासिकस्य तदवच्छिन्नचैतन्यस्य वाऽधिष्ठानत्वासंभव एव मन्यते, नतु व्यावहारिकस्य तदवच्छिन्नस्य चैतन्यस्य वा; यस्यासत्त्वापादकमभानापादकं वाऽज्ञानं न विरुद्धम् । तथाचाध्यस्तानुपादानत्वोक्तीनां प्रातिभासिकानधिष्ठानत्व एव तात्पर्यम्, नतु व्यावहारिकानधिष्ठानत्वे। सति चैवमाकाशाद्यवच्छिन्नस्योपादानत्वस्वीकारोऽपि नाद्वैतवादविरुद्धः । यथाचैवं सति—प्रथमान्त—पञ्चम्यन्ताकाशादिपदानां न समानार्थकता, तथा पूर्वमेव निरूपितम्; प्रथमान्ताकाशपदस्य केवलाकाशपरत्वस्य पञ्चम्यन्ताकाशपदस्याकाशतादात्म्यापन्नात्मपर्यन्तत्वस्य च स्वीकारात् ।

एतेन—"आकाशाद्वायुः" इत्यत्राकाशपदस्याकाशभावापन्नब्रह्मपरत्वं न संभवति; अस्याकाशस्यात्मन्यध्यस्तत्वेनावगतस्याधिष्ठानत्वायोगादित्यादि—परास्तम्; अनुक्तोपालम्भनत्वादेव ।

अस्तु वा प्रथमान्तपञ्चम्यन्तयोराकाशपदयोः समानार्थकतैव; तावताप्याकाशादिविकारानुगतं ब्रह्मैव तदधिष्ठानमिति "सच्च त्यच्चाभवत्" इति वाक्यान्तरेण ब्रह्मणः सर्वप्रपञ्चाध्यासाधिष्ठानत्वस्यावगमादर्थत एव सिद्ध्यति ।

"सच्च त्यच्चाभवत्" इति वाक्यं हि—'सोऽकामयते'ति सृष्टिमुपक्रम्य प्रवृत्तम् । अत्र च सशब्देन—मान्त्रवर्णिकं "ब्रह्मविदाप्नोती"तिप्रस्तुतं "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यारभ्यान्नमय-प्राणमय-मनोमयादिमुखेनोपदिष्टं ब्रह्मैव विवक्ष्यत इत्युभयसंप्रतिपन्नम् । तथाचोत्तरत्र सर्वकारणत्वमत्राकाशमात्रकारणत्वं च ब्रह्मणः प्रतिपाद्यत इति वर्णनासंभवाद् वाय्वादिकारणमपि ब्रह्मैवेति बोधने तात्पर्यमवश्यमेव स्वीकर्तव्यम्;

अन्यथा मतान्तरेऽपि—वाय्वादेर्ब्रह्मकारणकत्वमाकाशाद्वायुरित्यादिश्रुतिसिद्धमनुपपन्नं स्यात्, आत्मनो धर्मान्यथाभावेनोत्पत्तिः,आकाशादीनां तु स्वरूपान्यथाभवेन; तेषां प्रकृतिपरिणामित्वादिति हि मतान्तरसिद्धान्तः। तत्र च प्रथमान्ताकाशपदेन मुख्यवृत्त्या तदन्तर्यामिणो ग्रहणे ब्रह्मण्युत्पत्त्यापत्तिः। यदि गौण्या वृत्त्याऽऽकाशमात्रपरत्वम्, तर्हि पञ्चम्यन्तेनाकाशपदेनापि तावन्मात्रमेव समानार्थकत्वार्थं समादरणीयं स्यात्। यदि—आकाशादिपञ्चम्यन्तमात्रेण परमात्मनो ग्रहणम्, तर्हि मार्गेणैवायातम्। यतोऽद्वैतिनामेव पक्षो नामान्तरेण भवद्भिरपि मन्यते। इयान् विशेषः—यच्छरीरवाचकानां पदानामसति बाधके शरीरिपर्यन्तत्वमिति स्वकल्पितप्रक्रियाविशेषेणात्र वाक्यसमन्वयो मतान्तरे, अद्वैतमते तु—"तस्माद्वा एतस्मादात्मनः" इत्यस्यैव सर्वत्रानुषङ्गेणाथवा वाक्यान्तरैकवाक्यताबलाद् आकाशादिपदस्य तदधिष्ठानचैतन्यादिपरत्वमिति।

एतेन—"सच्च त्यच्चाभवत्" इत्यस्याध्यासपरत्वेऽपि ब्रह्मणः सर्वाधिष्ठानत्वमात्रस्यैव लाभेनाकाशाद्यनुगतब्रह्मणो वाय्वाद्यध्यासाधिष्ठानत्वरूपविशेषालाभ इति—परास्तम्।

"सच्च त्यच्चाभवत्" इत्यनेन सर्वाध्यासाधिष्ठानत्वस्येव "आकाशात् वायुरि" त्यादेराकाशाद्यनुगतब्रह्मणोऽप्यधिष्ठानत्वस्यावगमेन तत्तदुपहिताधिष्ठानत्वस्वीकारेणोभयोपपत्तेरेवादरणीयत्वेन विशेषाधिष्ठानत्ववादेऽपि तद्वाक्यस्य पूर्वोक्तरीत्या सन्दर्भशुद्ध्यर्थं स्वीकरणीयत्वात्।

"सच्च त्यच्चाभवदि" त्यस्य सर्वतादात्म्यपरस्य वाक्यस्येव "आकाशाद्वायुरि"त्यादेः कारणवाक्यस्यापि विवर्तोपादानोपादेयभावपरतैव हि युक्ता। नहि विवर्तोपादानत्वं विहाय ब्रह्मणः कारणत्वं सर्वप्रपञ्चतादात्म्यप्रयोजकं किमपि संभवति। तथाचे"दं रजतम्"

इत्यादिसामानाधिकरण्यप्रतीतिरिव ब्रह्मणः "सच्चत्यच्चा भवत्" इत्यादिसामानाधिकरण्यप्रतीतिरपि बाधानिबन्धनैव स्वीकर्तव्या, इति बाधकज्ञानविषयस्य ब्रह्मणो बाध्यज्ञानविषयस्य चाधिष्ठानाधिष्ठेय-भाव उक्तसामानाधिकरण्यप्रतीतिरेव प्रमाणम्। अत एव "तदनु-प्रविश्ये"ति ब्रह्मणः सर्वेषु प्रपञ्चेष्वनुगतिप्रतिपादनमुपपद्यते।

"सन् घटः" इत्यादौ सदात्मना घटादेः प्रतीतिर्ब्रह्मण-स्तेन रूपेण घटाद्यनुगतिनिबन्धनैव। इयं चानुगतिर्ब्रह्मणः सर्व-प्रपञ्चाध्यासाधिष्ठानत्वं विना नोपपद्यते; प्रकारान्तरेण ब्रह्म-णस्तत्रानुगतिनिरूपणासंभवात्। तथाच शुक्तिकाया रजतानुग-तिरिव ब्रह्मणोऽपि प्रपञ्चानुगतिर्ब्रह्मणः प्रपञ्चोपादानत्वं विशदमा-क्षिपति, इति "आकाशाद्वायुरि" त्यादिवाक्यादिव— "तदनु-प्रविश्ये" त्यादिसन्दर्भादपि फलत एव ब्रह्मणोऽधिष्ठानत्वं सिद्ध्यति, नतु शक्त्या। वस्तुतस्तु—पूर्वोक्तप्रकारेण पञ्चमी समाना-धिकरणविभक्तिश्च शक्त्यैव ब्रह्मणोऽधिष्ठानत्वं गमयति॥

"तत् सृष्ट्वे"ति प्रपञ्चस्य सृष्टिकर्मत्वप्रतिपादनं हि स्वाप्नि-कानामिव सत्यत्वं विनाऽप्युपपद्यते। नहि सृज्यमानत्वं सत्यत्व-व्याप्यम्; स्वाप्नेषु व्यभिचारात्। अत एव—"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति स्वाप्निकानां "वैधर्म्याच्च न स्वप्नादिवत्" इति जागरिकविलक्षणतया प्रतिपादितानां माया-मात्रत्वप्रतिपादनमुपपद्यते। यथाचोक्तयोः सूत्रयोर्न श्रीभाष्यमते स्वारस्यम्, तथाऽद्वैतमार्तण्डादौ व्यक्तम्।

एतेन—सृष्टिकर्मत्व-प्रवेशकर्मत्वाभ्यां प्रपञ्चस्य सत्यत्वावगमेन त्वदुक्तार्थोऽपि बाधित एव। नहि शुक्तिका रजतं सृष्ट्वा रजतमनुप्रविश्य रजतमभवदिति व्यवहारस्त्वयापि क्वचिदपि दृष्टचर इत्यादि—परास्तम्।

"तत्सृष्ट्वा" "तदनुप्रविश्य" "तदभवत्" इति व्यवहारो ह्यभिन्ननिमित्तोपादानविषयः, केवलोपादानविषयस्तु 'तदनुप्रविश्य'

तदभवत् इत्येव व्यवहारः। तथाच ब्रह्मणीव शुक्तिकायां केवलोपादानकारणे मृदादौ वा तदनुप्रविश्येति व्यवहारेऽपि तत्सृष्ट्वेति न व्यवहारः। सति चैवम्—ब्रह्मणः प्रपञ्चानुप्रवेशनिबन्धनं तादात्म्यमाम्नायमानं नान्यथोपपद्यते। 'तदनुप्रविश्ये'ति तदनुप्रवेशस्य तद्भावापत्तिं प्रति हेतुत्वस्यावगतस्य प्रकारान्तरेणोपपत्त्यसंभवात्॥

> एतेन—सर्वेषु वस्तुषु नियन्तृतया भगवताऽवस्थानात् सर्वेषां च भगवन्तं प्रति शरीरत्वेनापृथक्सिद्धविशेषणत्वात् तच्छरीरकत्वापत्तिरेव तदापत्तिरिति—परास्तम्।

नहि नियम्य-नियामकभावस्तदनुप्रवेशहेतुकः। राजादीनां प्रजास्वननुप्रविष्टानामपि प्रजानियन्तृत्वदर्शनात्।

एतेन—"अहमात्मा गुडाकेश: सर्वभूताशयस्थितः।" "आदित्यानामहं विष्णुः" "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादिवाक्यान्यपि—व्याख्यातानि; अहमात्मेति वाक्यं हि जीव-ब्रह्मणोरभेदमेव गोचरयति; नतु जीवनियन्तृत्वमपि ब्रह्मणः। जीवोपाध्यवस्थानेन जीवत्वेऽप्यात्मस्वरूपेणाहमेव सर्वभूताशयस्थित इति हि प्रथमवाक्यार्थः। अत एव—सर्वभूताशयस्थितः आत्माऽहमिति निर्देश उपपद्यते; अन्यथाऽन्यतरपदवैयर्थ्यापत्तिः, इति कथमिदं वाक्यं जीव-ब्रह्मणोः-शरीर-शरीरिभावानुगुणम्?

शरीर-शरीरिभावो हि परमात्मनो यद्यत्र सर्वभूताशयशरीरकत्वेन विवक्ष्यते, तर्ह्यात्मपदवैयर्थ्यम्। यदि सर्वभूताशयस्थितात्मशरीरकत्वेन, तर्हि न केवलमात्मपदस्यैकवचनान्तत्वायोगः, किन्तु सर्वभूताशयस्थित इति पदवैयर्थ्यमपि। नहि सामानाधिकरण्यं सर्वत्र शरीर-शरीरिभावनिबन्धनमिति नियमः, "उद्भिदा यजेत" इत्यादौ व्यभिचारात्। अत एव हि 'सोऽयं देवदत्तः इति सामानाधिकरण्यप्रतीतिनिर्वाहः। यथाच सर्वशरीरकत्वमेव परमात्मनो नासाधारणं रूपम्, तथा प्रमाणाभावादन्यत्र व्यक्तम्। अन्त-

र्यामिब्राह्मणं तु परमात्मनस्तथोपासनाविशेषविधानपरमेव, नतु पारमार्थिकपरमात्मस्वरूपनिरूपणपरम् । "आदित्यानामहं विष्णुः" इत्यादिवाक्यमपि परमात्मविभूतिस्वरूपनिरूपणपरमुपसंहारे सर्वस्य भगवद्विभूतित्वस्य व्यवस्थापनात् सर्वस्य परमात्मकार्यत्वमभिप्रेत्यैव प्रवृत्तम्, नतु शरीर-शरीरिभावमादाय ॥

एतेन—"सर्वं समाप्नोषि ततोऽसि सर्वः" इति वाक्यमपि —व्याख्यातम्; उपादानत्वापरपर्यायाधिष्ठानत्वप्रयुक्तानुगतिनिरूपणपरत्वादुक्तवाक्यस्य । यथाचा "वस्थितेरिति काशकृत्स्नः" इति सूत्रं न शरीर-शरीरिभावनिरूपणपरम्, किन्तु ब्रह्मण एव जीवात्मनाऽवस्थाननिरूपणद्वारा जीवब्रह्माभेदस्यैव निरूपणपरम्, तथा व्यक्तमाकरे । "बहु स्यां प्रजायेय" इत्युपक्रमोऽपि ब्रह्मण एव बहुभावः, नतु ब्रह्मव्यतिरेकेण बहुभावो नामेति बोधयन् शरीरात्म भावनिबन्धनं न सामानाधिकरण्यम्, किन्त्वधिष्ठानारोप्यभावापरपर्यायोपादानोपेदेयभावनिबन्धनमेव तदिति गमयति । नहि मृत्पिण्डादेरिव ब्रह्मणः परिणामिकारणत्वं संभवतीत्युभयसम्मतमिदम् ॥

सति चैवं 'बहु स्यामि'ति संकल्पो मिथ्यापदार्थरूपेण बहुभवनसंकल्पमेव गोचरयति । सत्यं सत्यस्य ब्रह्मणो मिथ्यापदार्थेनाभेदः पारमार्थिको न संभवति, तथापि तद्व्यतिरेकेण तदभावेन भेदनिषेधरूपोऽभेदः संभवत्येव । एतादृश एव ब्रह्मणा सर्वेषामभेदः, नतु सर्वैरैक्यरूपमित्यादिकं बहु विस्तृतं "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादावाकरे; अन्यथा हि—"सत्यं चानृतं च सत्यमभवत्" इति ब्रह्मणोऽनृतेनाप्यभेदः प्रतिपादितः कथमुपपद्येत ?

एतेन—नहि सत्यासत्ययोरभेदः संभवति । तस्मात् "सच्च त्यच्चाभवम्" इत्यादेः कथमपि त्वदभिमतार्थबोधकत्वासंभवात् तदनुरोधेन —"आकाशाद्वायुरि" त्यत्रार्थवर्णनं सुतरामनुपपन्नमित्यादि--परास्तम्;

"आकाशाद्वायुरि"त्यादेः प्रकरणस्य पूर्वोक्तरीत्या ब्रह्मणि प्रपञ्चाध्यारोपपरत्वाङ्गीकारस्यैव युक्तत्वात् ।

यथाचाकाश-वाय्वादिसृष्टेः क्रमिकत्वेऽपि चैतन्यमेव सर्वेषामधिष्ठानम्, न त्वाकाशाद्यवच्छिन्नं विशिष्टचैतन्यम्, तथा पूर्वमेव विवेचितम्, इति ब्रह्मविज्ञानादेकस्मात् सर्वाध्यासनिवृत्तिरपि नानुपपन्ना । यस्तु "विपर्ययेण तु क्रमोऽत उपपद्यते च" इति प्रलयेऽपि क्रमो व्यवस्थापितः, स निवृत्त्यभिप्रायः, नतु बाधाभिप्रायः । निवृत्तिरूपो हि नाशो नाधिष्ठानज्ञाननिबन्धनः, किन्तु निमित्तान्तराधीन इत्यादि व्यक्तमन्यत्र विस्तरेण । अयं च प्रलयक्रमः सृष्टिक्रमश्च पूर्वपूर्वस्याध्यस्यमानस्य परिणामिकारणताविधयोत्तरोत्तराधारत्वाभिप्रायेण, न त्वधिष्ठानत्वाभिप्रायेणेति पूर्वमेव निरूपणात् सृष्टि-प्रलयक्रमनिरूपणं परिणाम-निवृत्त्युभयाभिप्रायम्, नतु तदात्मना भानरूपविवर्तं तद्व्यतिरेकेणाभावरूपं बाधं वा गोचरयति । तथाच स्थूलरूपतापत्तिस्तत्तत्साद्यवस्थाज्ञानस्य सृष्टिः, तत्तत्स्थूलकार्याणां तत्तदवस्थाज्ञानरूपसूक्ष्मकारणभावापत्तिः प्रलयः । तत्र सृष्टिः केवलायाः प्रकृतेरुपादानत्वासंभवात् चैतन्याधिष्ठानस्यापेक्षणीयत्वे चैतन्यविवर्तत्वं विना नात्मानं लभते, प्रलयस्तु बाधं विनाप्युपपद्यते, इति सृष्टि-प्रलययोः सूत्रेषु क्रमव्यवस्थापनं न विवर्त-बाधयोरपि क्रमं विषयीकरोति; चैतन्यस्याज्ञायमानस्य ज्ञायमानस्य च क्रमेणोपहित-शुद्धभावाङ्गीकारे बाधकाभावात् ।

एतेन—क्रमिकाध्यासाङ्गीकारे "विपर्ययेण तु क्रमः" इति प्रलयक्रमव्यवस्थाविरोधादुक्ताधिकरणविरोधः, यदि विनाशो निवृत्तेरन्यः, तर्हि तुल्यन्यायेन सृष्टिरप्यध्यासो न स्यादित्यादि—परास्तम्, सृष्टेरध्यासापेक्षायामपि स्वयमध्यासमात्ररूपत्वानङ्गीकारपक्षेण सर्वदोषनिरासात् ।

अयं भावः—"तस्माद्वा एतस्मादात्मनः" इति वाक्यमात्मपदेन कारणशरीरोपहितब्रह्मविवक्षणेनांशत आकाशादिपरि-

णामहेतुं तद्विवर्तहेतुं च बोधयति; गुहानिहिताभिन्नरूपस्य "तस्माद्वा एतस्मादि" त्यंशेनानुकर्षणस्यान्यथा निष्प्रयोजनत्वापत्तेः। तथाच—"आकाशाद्वायुः" इत्यादावुपाधीनां परिणामिकारणानां भेदेन क्रमापेक्षायामप्युपहितस्यात्मन एकत्वेन न तत्र क्रमापेक्षेति परिणाम-प्रलयावेव क्रमापेक्षौ, न विवर्त-बाधौ, कारणशरीरोपहितमाकाश-वाय्वाद्युपहितं च विवर्तोपादानतयाभिमतं चात्मस्वरूपं तु न विशिष्टम्, किन्तु शुद्धमेवेति सूचनार्थमेव श्रुतौ प्रतिसृष्ट्यात्मपदानाम्नानम्। तथाचाकाशाद्युपाध्यपेक्षयैव सृष्टि-प्रलययोः क्रमः, न तु परमात्मस्वरूपापेक्षया। तत्र तु—एकोक्त्यैव सर्वकार्यत्वं सर्वबाधो वा। अत एव—"सोऽकामयते" त्यादिके परमात्मस्वरूपमात्राभिप्रायेण प्रवृत्ते प्रकरण एकोक्त्यैव—"बहु स्यां प्रजायेये" त्यादिना सृष्ट्याम्नानमुपपद्यते। व्यक्तं चैतत्—"तानि परे तथाह्याह हि" इति सूत्र-तदाकरयोः। श्रीभाष्यादिमते तु तत्सूत्रं वितथमेवेत्यादि वेदान्तपरिभाषाभूमिकायामस्मदीयायां व्यक्तम्। इदमेवाभिप्रेत्य—"यतो वाचो निवर्तन्ते" इति वाङ्मनसागोचरत्वोपपादनव्याजेन निर्विशेषत्वमप्यात्मनः कारणत्वेनोपक्रान्तस्याध्यारोपितानां कार्यजातानामपवादद्वारा प्रतिपाद्यते; अन्यथा कारणस्य ब्रह्मणो ब्रह्मरूपस्य वाऽनन्दस्य शब्दशक्त्या सर्ववेदान्तप्रतिपाद्यत्वसंभवात् वाङ्मनसागोचरत्वप्रतिपादनमसङ्गतमेव स्यात्।

यतः—आनन्दात् इयत्तारूपं पारं प्राप्य वाचो मनसा सह निवर्तन्ते इति "यतो वाचः" इत्यस्य मतान्तराभिमतं विवरणम्, अद्वैताभिमतं तु यतः—आनन्दरूपात् ब्रह्मणो मनसा सह वाचो निवर्तन्ते इति।

तत्र प्रथममते इयत्तारूपं पारं प्राप्येत्यध्याहारदोषः, प्रजापत्यानन्दशतगुणितत्वेन ब्रह्मानन्देयत्तायाः पारस्यापि निर्णीतत्वाद्

इयत्तारूपं पारं प्राप्य निवर्तन्ते इत्युक्त्यनुपपत्तिः, ब्रह्मण एवानन्दमयशब्देन पुच्छशब्देन वा प्रस्तुतस्य प्रकरणार्थत्वाद् ब्रह्मसम्बन्ध्यानन्दस्योपसंहरणायोगश्च दूषणान्यपरिहरणीयानि, अद्वैतमते तु ब्रह्मरूपानन्दस्यवोपसंहारादुपक्रमोपसंहारयोरैकरूप्यम्, "स एको ब्रह्मण आनन्दः" इत्यत्र ब्रह्मपदेन ज्ञेयब्रह्मणोऽग्रहणात् तस्या वाङ्मनसगोचरत्वोपपत्तिः, यथाश्रुतान्वयाद् नाध्याहारादिदोषश्च; ब्रह्मण आनन्दमित्यभेदे षष्ठी तु राहोः शिर इत्यादौ दृष्टत्वाद् न दूषणम्।

इदमेवात्रालोचनीयम्—यत् कथं वाङ्मनसागोचत्वं ब्रह्मणः यदि सगुणं ब्रह्म प्रकरणार्थः स्यात्? वयं तु प्रतीमः—ब्रह्मनिर्विशेषताव्यवस्थापनार्थत्वादस्य वाक्यसन्दर्भस्य निर्विशेषे चाज्ञाननिवृत्तिव्यतिरेकेणापरस्य कार्यस्यानपेक्षणात् सर्वाणि प्रमाणानि घटादीनामिव न प्रमेयत्वमप्यात्मन आपादयन्तीति बोधनार्थमेवैतावान् वाक्यसन्दर्भः। सति चैवं ब्रह्मणि सृष्टिवाक्येन पूर्वतनेनाध्यारोपितस्य प्रपञ्चस्यापवाद एव "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इत्यादिवाक्यार्थः। अत एव—"द्वितीयाद्वै भयं भवति" इत्यादिना द्वितीयदर्शनफलभयनिवृत्तिफलेनोपसंहार उपपद्यते। अयं ह्युपसंहारो ब्रह्मणोऽत्र वाक्येऽद्वितीयत्वतात्पर्यं विना नोपपद्यते।

एतेन—उपक्रमानुरोधात् प्रकरणगततत्तद्वाक्यपरामर्शात्, उपरितनवाक्यानुगुण्यात्, श्रुत्यन्तरैकार्थ्याच्च—आनन्देयत्तारूपं पारमप्राप्यानन्दात् वाचो मनसा सह निवर्तन्त इत्यर्थपरत्वमेव "यतो वाचो निवर्तन्ते" इत्यादिवाक्यार्थः, न तु ब्रह्मण्यारोपितप्रपञ्चापवादपरतेत्यादि—परास्तम्।

एतदुक्तं भवति—ब्रह्मवाक्यानि हि सर्वाणि 'सन् घटः' "सर्वं खल्विदं ब्रह्म" त्यादीनि नाखण्डं ब्रह्म गोचरयन्ति, यतः

सद्रूपेण ज्ञातमानन्दरूपेणाज्ञातमेव ब्रह्म पूर्वोक्तविधया कारणं मन्यते, यस्य कारणवाक्येषु सन् घट इत्यादिलौकिकव्यवहारे च भानम्। तथा-चानन्दात्मनाऽपि ज्ञानं यद् अपेक्षितम्, तदिदमनानन्दतापादकाज्ञा-ननिवृत्तिं विना न संभवति। सा चा"थात आदेशो नेति नेति" इतीतरनिषेधमुखेन स्वस्वरूपज्ञानमात्राधीना, इति वेदान्त-वाक्यानीतरनिषेधार्थान्येव, नात्मस्वरूपार्थानि; स्वप्रकाशत्वात् स्वस्वरूपस्य। इदमेवाभिप्रेत्योक्तमाकरे—"नहि शास्त्रमिदन्तया ब्रह्म प्रतिपादयति; अविद्यानिवृत्तिपरत्वात् शास्त्रस्ये"ति॥

सन्मात्रावगतिर्हि निर्विकल्पज्ञानं न विकल्पमुखेन प्रवर्तमाना वाचो मुख्यया वृत्त्या जनयन्ति, नवा शास्त्राचार्योपदेशासंस्कृतं मनः, सविकल्पकज्ञानजनकत्वाद् प्रायेण मुख्यया गौण्या वा वृत्त्या शब्दानां मनसश्च। तथाच ब्रह्मणो वाङ्मनसागोचरत्वप्रतिपादनपरमिदं वाक्यजातं ब्रह्मणि सजातीय-विजातीय-स्वगतभेदराहित्यबोधनार्थ-मेव प्रवृत्तमित्यकामैरपि स्वीकरणीयम्।

सति चैवम्—'इदं रजतमि'ति सविकल्पकज्ञानं तादृशव्यव-हारो वा यथा रजताधिष्ठानशुक्तिस्वरूपमात्रं न विषयीकरोति; सत्यानृतमिथुनीकरणरूपत्वात् तस्य, तथा सन् घट इत्यादिव्यवहारा अपि घटाद्यधिष्ठानं सद्रूपं ब्रह्ममात्रं न गोचरयन्ति। शुक्तित्वाज्ञान-दशायां हि जायमानः—"इदं रजतम्" इति व्यवहारो वस्तुगत्या रजततादात्म्यापन्नस्येदंपदार्थस्य शुक्तित्वेऽपि शुक्तिरेव रजतमिति न विषयीकरोतीति सर्वसम्मतमिदम्, अधिष्ठानगतासाधारणधर्म-ज्ञानस्य तद्विरुद्धधर्मारोपात्मकभ्रमविरोधित्वात्, एवं सृष्टिवाक्यानि सन् घट इत्यादिव्यवहारा वा सत्पदार्थस्य वस्तुगत्या ब्रह्मत्वेऽपि नाखण्डं ब्रह्म गोचरयन्ति; सद्वितीयताज्ञानस्याखण्डज्ञानविरोधि-त्वात्। तथाच—'इदं रजतमि'ति व्यवहारो यथा शुक्तित्वम-

प्राप्य निवर्तते, ... सन् घट इत्यादिव्यवहारा अपि यदखण्डानन्द-रूपं ब्रह्म, ...प्राप्य निवर्तन्त इति सुष्ठु दृष्टान्त-दार्ष्टान्तिकभावो लग... । यथा—शुक्तित्वज्ञाने सति 'नेदं रजतमि'ति बाधो दृश्यते, एवमत्राप्यखण्डानन्दरूपब्रह्मज्ञाने सति 'न सन् घटः' इति बाधो भवितेति तु पारमार्थिको भावः । अनेन च प्रपञ्चापवादोऽप्यर्थ-सिद्धो भवतीति तु हृदयम् ।

'इदं रजतम्' इति वाक्यं हि सामान्यरूपेण शुक्तिं जानन्तं विशेषरूपेण नामजानन्तं च पुरुषं प्रति शुक्तिस्वरूपज्ञापनाय प्रयुज्यते । यदा शुक्तिस्वरूपप्रश्नः, तदा हि—'इदं रजतम्' इति वाक्यार्थः सिद्धो भवति । यदिदं रजतमभात् सेयं शुक्तिरि-ति तु निष्कृष्टार्थः । अत्र 'इदं रजतं शुक्तिरि'ति व्यवहार इदं रजत-मिति व्यवहारो मुख्यवृत्त्या शुक्तिस्वरूपं ज्ञापयितुं न शक्नोति, इति 'नेदं रजतम्', किन्तु शुक्तिरिति निषेधमुखेन स्वरूपज्ञापने परम्परया तस्योपयोगोऽङ्गीकरणीयः, एवमेव सन् घट इत्यादिवाक्यं मुख्यविधया ब्रह्मबोधनासमर्थं परम्परया निषेधमुखेन ब्रह्म बोध-यतीति न कोऽपि विरोधः ।

एतेन— नहि लोके इदं रजतमिति व्यवहारः शुक्तित्वप्राप्त्यपेक्षया प्रवृत्तो दृश्यते; एवं दार्ष्टान्तिकोऽपि सन् घटः इत्यादिव्यवहारो नाखण्डाकारप्राप्त्यपेक्षया प्रवृत्तो दृश्यते, इति इदं रजतम् सन् घट इति व्यवहारयोरद्वैत्यभिमतदृष्टान्त-दार्ष्टान्तिकभावा-योग इत्यादिकमपि—परास्तम् ।

अत्राप्राप्य निवर्तन्ते इत्यनेन तदविषयीकरणेन ततो निवृ-त्तिरेव प्रतीयते, नतु देवदत्तस्तटाकपर्यन्तं गत्वा तटाके सलिलं नास्तीति केनचिदुक्ते निवर्तत इत्युक्ते प्रवृत्तेस्तटाकपर्यन्त गोच-रत्वम्, मध्ये तत्रापेक्षिताभावज्ञाने निवृत्तिश्च यथा प्रतीयते, तद्वत् प्रकृते सन् घट इति व्यवहारवृत्तेरखण्डाकारपर्यन्तगोचरत्वम्, "अथात आदेशो नेति नेति" इति निषेधशास्त्रेण तदभावज्ञाने

तदप्राप्य मध्ये निवृत्तिश्च प्रतीयत इति परकल्पितप्रणाल्या सिद्धा प्राप्तिपूर्विका निवृत्तिः, येन—"व्यवहारप्रवृत्तेरखण्डाकारगोचर-पर्यन्तत्वस्यासंभवादि" त्याद्यनुक्तोपालम्भनानामवकाशः स्यात्। तथाच सर्वाणि सगुणवाक्यानि ब्रह्मस्वरूपबोधनार्थं प्रवृत्तान्यपि न पारमार्थिकं ब्रह्म स्वरसतो प्रबोधयितुं समर्थानि, किन्तु कथंचन तटस्थलक्षणविधया 'सेयं शुक्तिः, यदिदं रजतम्' इत्यादिवाक्यानीवेतरनिषेधमुखेनैव बोधयितुं समर्थानीत्येवात्र तात्पर्यार्थः।

एतेन—अप्राप्येति अद्वैताभिमतं व्याख्यानं सर्वथाऽसङ्गतमिति—परास्तम्।

सन् घट इत्यादिव्यवहारो हि घटतादात्म्यापन्नं ब्रह्म, ब्रह्मतादात्म्यापन्नं घटादिकं वा विषयीकुर्वन् न ब्रह्मस्वरूपमात्रविषयीकरणसमर्थः; अखण्डरूपब्रह्मणो निर्विकल्पकज्ञानमात्रवेद्यत्वेन सन् घट इत्यादिसविकल्पज्ञानावेद्यत्वात्।

एतेन—सन् घट इति व्यवहारस्य ब्रह्मण्यध्यस्तप्रपञ्चतादात्म्योल्लेखित्वकथनमसङ्गतम्; तथासति ब्रह्मवाचकसत्पदप्रयोगायोगात्। तस्य तद्वाचकत्वं हि त्वदभिमतम्। नचाध्यासस्थले तत्प्रयोग उपपद्यते; भ्रमोपमर्दप्रसंगस्योक्तत्वात्, अतः प्रमाविषयत्वादिरूपसत्ताधर्माश्रयो घट इत्येव सन् घट इत्यत्र बोध इत्यादिकम्—अपास्तम्।

सद्रूपेण ज्ञातस्यानन्दरूपेणाज्ञातस्य च ब्रह्मण एव घटाद्यधिष्ठानत्वेन सत्पदेन ब्रह्मविवक्षायामपि हि नाध्यासविरोधः; अखण्डब्रह्मणोऽनावृतस्यैव भ्रमविरोधित्वम्, नतु सखण्डस्यावृतस्यापीति हि वस्तुस्थितिः। इयमेव रीतिः शुक्तिरजतभ्रमस्थलेऽपि दृष्टा, यत्र शुक्तिकाया इदन्त्वेन ज्ञानं शुक्तित्वेनाज्ञानं च विना न भ्रम उदेति। यथाच शुक्तिकायाः यावद्ब्रह्मसाक्षात्कारमनुवर्तमानायाः कल्पितेनैव स्वरूपेणावस्थानं सविशेषरूपेण, एवं ब्रह्मणोऽपि परमार्थगत्या निर्विशेषस्यापि यावदखण्डाकारसाक्षात्कारं कल्पितास्सविशेषाकारा ब-

इव एव वर्तन्ते, इति सत्त्व-चित्त्वानन्दत्वादीनां कल्पितेन विशेषेण ब्रह्मधर्मत्वाविरोधाद् काल्पनिकाकारमादाय निर्वाहसंभवः। तत्र यथा शुक्तित्वेन ज्ञातायाः शुक्तेरेव रजतभ्रमविरोधित्वेनाधिष्ठानत्वव्यपदेशः, न त्विदंपदार्थस्य सर्पादिभ्रमसाधारणस्य, तथा प्रकृतेऽपि—अखण्डब्रह्मसाक्षात्कारस्यैव सर्वप्रपञ्चभ्रमविरोधित्वाद् अखण्डब्रह्मणो निर्विशेषस्यैवाधिष्ठानत्वम्, नतु सत्पदार्थस्य ब्रह्मणः; स्वनिवर्तकज्ञानविषयस्यैवाधिष्ठानत्वादिति ह्यद्वैतिनां प्रक्रिया।

एतेन—काल्पनिकाकारमादाय तु न निर्वाहः; निर्विशेषब्रह्मण एव घट-पटाद्यनुगतत्वस्याद्वैतिभिः स्वीकारादित्यादि—परास्तम्; निर्विशेषस्य ब्रह्मण एव सदात्मना कल्पितेन घटाद्यनुगतिस्वीकारेऽपि पारमार्थिकनिर्विशेषत्वाविघातात्।

'निर्विशेषेण सर्वविकारानुगतेन' 'सच्चिदानन्दरूपस्य ब्रह्मणः प्रपञ्चे तादात्म्यमिति पूर्वाचार्याणामुक्तिस्तु वस्तुशक्तिमनुरुध्यैव; नतु सन् घट इति व्यवहारदशायामपि निर्विशेषस्याखण्डस्यैव सत्पदेन भानमनुरुध्य। सन् घट इति हि व्यवहारो यावद्घटादिप्रतीति नियतमनुवर्तेत। घटादिप्रतीतिं विनाऽखण्डसद्रूपमात्रं तु न सन् घट इत्यादिप्रतीतौ भासते, इति सन् घट इत्यादिव्यवहाराणां निर्विशेषब्रह्माविषयीकरणात्—युक्तमाम्नातम्—"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहे" ति। अनेन हि वाक्येन व्यवहारदशायां वाचामखण्डसन्मात्रविषयकत्वमेव निवार्यते, नतु सन् घट इत्यादिव्यवहारमात्रम्, येन घटादिव्यवहाराणाम्—"अथात आदेशो नेति नेति" इति श्रुत्या बाधे व्यवहार्याभावादेव निवृत्तिर्भविष्यतीति नास्य वाक्यस्य किञ्चित् प्रयोजनमिति शङ्का सावसरा स्यात्।

तदयं निष्कर्षः—यथा 'इदं रजतमि' ति व्यवहारो शुक्ति,

शुक्तित्वेनाविषयीकृत्य ततो निवर्तते, तथा सन् घट इति व्यवहारोऽपि निर्विशेषं ब्रह्माविषयीकृत्य ततो निवर्तते।

तथाचेयमत्र वाक्ययोजना—यतः = ब्रह्मरूपादानन्दात्, वाचः—सन् घट इत्यादिव्यवहाराः सृष्ट्यादिवाक्यानि वा अप्राप्य=अविषयीकृत्य, निवर्तन्ते=कुण्ठितशक्तिका भवन्ति, तं ब्रह्मण आनन्दम्=ब्रह्मरूपमानन्दम्, विद्वान्=जानन्, न बिभेति कुतश्चन=द्वितीयादनात्मनो न भयं प्राप्नोति; भयनिमित्तस्य द्वितीयस्य ब्रह्मणि बाधात्—इति, ननु परकल्पिता—यतः=यस्माद् हेतोर्वाचो निवर्तन्ते, तस्माद् ब्रह्मण आनन्दं विद्वानिति वा 'यतः यस्मात् ब्रह्मणो वाचो निवर्तन्ते, तस्य ब्रह्मण इति वा, येनासामञ्जस्यं विरोधो वा परकल्पितरीत्या समापद्येत। सति चैवं व्यवहारदशायामज्ञाताखण्डब्रह्मसाक्षात्कारात् द्वितीयाधीनभयनिवृत्तिप्रतिपादनपरेणानेन वाक्येनाखण्डसाक्षात्कारनिवर्त्यत्वं द्वितीयस्यार्थतो गम्यते, इति रज्जुज्ञानेन सर्पाद् न बिभेतीति वाक्यं यथा रज्जोः सर्पापवादमेव तात्पर्यतो गोचरयति, तथा प्रकृते ब्रह्मणि प्रपञ्चापवद एव तात्पर्यं पर्यवस्यति।

एतेन—अस्य वाक्यस्य प्रपञ्चापवादपरत्वे 'न ब्रह्मणि प्रपञ्चः' 'न ब्रह्म प्रपञ्चः' इति वैवं श्रूयेत, न 'वाचो निवर्तन्ते' इति वक्रोक्तिः। नहि 'इदं रजतमि'ति भ्रमे वर्तमाने तन्निषेधाय रजतवाग् निवर्तते' इत्युक्तिर्युक्ता दृष्टा वेत्यादि—परास्तम्।

यतो रज्जोरयं सर्प इति व्यवहारो निवर्तते, तां रज्जुम्—तस्या रज्वा रज्जुत्वं वा विद्वान् न बिभेति सर्पात् इति वाक्यप्रयोगस्येवात्रापि तत्संभवात्। एतेन—शुक्तिं ज्ञात्वा रजतवाङ् निवर्तत इत्युक्तियोगोऽपि—व्याख्यातः॥

अत्र—'आनन्दं विद्वान्' इति वा 'ब्रह्म विद्वानि'ति वा प्रयोगेणापि निर्वाहेऽप्यानन्दं ब्रह्मण इत्याम्नानादिदं ज्ञाप्यते—

आनन्दांशेन ज्ञानमेव मोक्षसाधनम्; सच्चिदंशाभ्यां ज्ञातस्याप्यानन्दांशात्मनाऽज्ञानेनैव प्रपञ्चविभ्रमादिति। इदमेवाभिप्रेत्य—ब्रह्मण इति षष्ठीप्रयोगोऽपि कल्पितं भेदमादाय प्रवृत्तः। एतेन आनन्दं ब्रह्मण इति निर्देशाद् ब्रह्मानन्दयोर्धर्म-धर्मिभावोऽपि निरस्तो वेदितव्यः; अन्यथा हि शतगुणितप्रजापत्यानन्दतुल्यत्वस्य—"ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः" इति विशदं ब्रह्मसम्बन्ध्यानन्देऽवगमाद् वाङ्मनसगोचरे तत्र "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहे" त्युक्तिरत्यन्तमेवासङ्गता स्यात्।

एतेन—शतगुणितप्रजापत्यानन्दतुल्यत्वश्रवणप्रयुक्ता या ब्रह्मसम्बन्ध्यानन्दस्य परिच्छिन्नत्वशङ्का, तन्निवृत्त्यर्थं तस्य वाङ्मनसागोचरत्वकथनेनापरिच्छिन्नत्वं बोधयन्ती श्रुतिस्तादृशानन्दविशिष्टब्रह्मोपासनस्य सर्वभयनिवृत्तिफलकत्वं प्रतिपादयतीत्ययमर्थः कुतो नाद्वैतिभ्यो रोचत इत्युक्तिरपि—परास्ता।

श्रुत्यैव—"स को ब्रह्मण आनन्दः" इत्यत्र यस्य ब्रह्मणो विवक्षा, तस्य "ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः" इति स्पष्टं तस्यानन्दस्याकामहतश्रोत्रियानन्दसाधारण्येन परिच्छिन्नत्वव्यवस्थापनेन तत्र परिच्छिन्नत्वशङ्काया एवानुदयेन तन्निवृत्त्यर्थतयोक्तवाक्यप्रवृत्तिवर्णनासंभवात्। अस्मन्मतेतु—"यतो वाचो निवर्तन्ते"इति वाक्यसन्दर्भस्य "स एको ब्रह्मण आनन्दः" इत्यस्य च विषयभेदात्—"यतो वाचो निवर्तन्ते"इति सुष्ठु लगति, इति कथं वा आनन्दविशिष्टब्रह्मोपासनस्य सर्वभयनिवृत्तिफलकत्वमेवोक्तश्रुतिः प्रतिपादयतीत्ययमर्थः पामरायापि रोचेत?

तथाच—अप्राप्य निवर्तन्त इत्युक्त्या हि प्रवृत्तयोरेव वाङ्मनसयोरर्धपथ एव निवृत्तिप्रतीतेरन्यस्य कस्यचिदानन्दपरिच्छेदविषयस्य वाक्यस्य प्रवृत्तस्यादर्शनात् प्रवृत्तस्य शतगुणितोत्तरक्रमे-

णोत्कर्षप्रतिपादकस्य तद्विषयस्यापि प्रवृत्तत्वादेव निवृत्त्यसंभवादद्वैत्य-भिमतार्थ एव सर्वैरप्येष्टव्यः। "ते ये शतमि" ति पर्यायेषु शतशब्दो हि न शतसंख्यामात्रपरः, किन्तु सहस्रादिसंख्यापर इत्येवाङ्गीकर्तव्यम्; अन्यथा—भवन्मतरीत्या ब्रह्मानन्दस्य प्रजापत्यानन्दापेक्षया शत-गुणितानन्दत्वेन परिच्छिन्नत्वशङ्कायाः सहस्रेणापि—"यतो वाचो निवर्तन्ते" इति वाक्येन वारणासंभवः। यतः—शतगुणितप्रजा-पत्यानन्दतुल्यत्वमाम्नातमबाधित्वा न वाक्यार्थवर्णनं भवतां संभवति, इति "ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः" इति वाक्यमनर्थकमेव भवन्मते स्यात्, प्रजापत्यानन्दवर्णनानन्तरमेव—"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह।" इति वाक्यप्रवृत्त्यैव भवदभिमतार्थनिर्वाहसंभवात्। यथाच—"ब्रह्मविदाप्नोति परम्" इत्युपक्रमादिस्वारस्यं "यतो वाचो निवर्तन्ते" इत्यस्य ब्रह्मरूपाखण्डा-नन्दपरत्व एव, नान्यथा, तथा पूर्वमेव विवेचितम्।

अयमाशयः—नात्र श्रुतौ ब्रह्मसम्बन्ध्यानन्दाद् वाचां निवृ-त्तिरभिधीयते, तत्र "स एको ब्रह्मण आनन्दः" इत्यादिवाक्यानां स्वरसतः प्रवृत्तत्वेन ततो निवृत्तिवर्णनासंभवात्। "सैषानन्दस्य मीमांसा भवती" ति हि आनन्दमीमांसा प्रवृत्ता मध्येमार्गं ब्रह्म-सम्बन्ध्यानन्दपर्यन्तं गत्वा ब्रह्मरूपमानन्दमप्राप्य निवृत्तेति हि सुष्ठु लगत्यद्वैताभिमतयोजनाश्रयणे। आनन्दमीमांसा हीयमानन्दरूप-ब्रह्ममीमांसैव, न ब्रह्मसम्बन्ध्यानन्दमीमांसा; अप्रस्तुतत्वात्। तथा-ऽऽनन्दमीमांसा सविशेषब्रह्मानन्दपर्यन्तमेव प्रवर्तते, यावद्वाङ्-मनसयोरपि प्रवृत्तिरकुण्ठिता; निर्विशेषाखण्डानन्दस्वरूपं तु पुच्छ-ब्रह्माभिधेयं नेदन्तया केनापि वाक्येन निर्धारयितुं शक्यम्, इति नानन्दमीमांसाऽऽनन्देयत्तामीमांसा, किन्तु तत्स्वरूपजिज्ञासैव। तथाच सविशेषब्रह्मानन्दोऽखण्डानन्दप्रतिबिम्बविशेषः, तत्प्रतिबि-

म्बविशेषः प्रजापत्यानन्दः, तत्प्रतिबिम्बविशेषो बृहस्पत्यानन्दः, तत्प्रतिबिम्बादिविशेषा इन्द्राद्यानन्दा इति प्रतिबिम्बानामेवानन्दानामखण्डानन्दमात्रोपजीविनां वाङ्मनसगोचरत्वम् , नतु बिम्बानन्दस्य निर्विशेषब्रह्मरूपस्येत्येव "यतो वाचो निवर्तन्ते" इति वाक्यार्थः।

एतेन— ब्रह्मानन्दपरिच्छेदाय प्रवृत्ता वाचो ब्रह्मानन्दे परिच्छेदाभावात् ततो निवर्तन्ते इत्येवात्र वाक्यार्थ इत्यादि—प्रत्युक्तम् ; आनन्दस्वरूपजिज्ञासाया एव प्रस्तुतत्वेन तदियत्ताया अप्रस्तुतत्वात्।

तथाच—"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्यन्तरसिद्धार्थोपपादनार्थैवाऽऽनन्दमीमांसेति तदेकवाक्यताप्यत्र सिद्ध्यति।

तदयं निर्गलितार्थः—ब्रह्मसम्बन्ध्यानन्दस्य परमावधिः शतगुणितप्रजापत्यानन्दः, यत्र वाङ्मनसे सम्यगेव प्रवर्तेते, स्वरूपानन्दस्तु स्वतो निरतिशयो नेयत्तापरिच्छिन्नः, इति न चरमावधिमपेक्षते, येन "सैषाऽऽनन्दस्ये"त्यानन्दमीमांसाया आनन्दचरमावधिप्राप्तिपर्यन्तमेव प्रवृत्तिविवक्षोचिता।

वस्तुतस्तु—"यतो वाचो निवर्तन्ते" इति वाक्यसन्दर्भेणापि ब्रह्मानन्दस्यापरिच्छिन्नत्वमेव वाङ्मनसागोचरत्वेन प्रतिपाद्यते, नतु तस्य चरमावधिः प्रतिपाद्यते, इति कथं ब्रह्मानन्देयत्तापरिच्छेदार्थत्वमानन्दमीमांसायाः पराभिमतं संभवद्युक्तिकमपि ?

एतेन—उपर्युपरि शतशः परिकल्पनेऽपि नेयत्ता प्राप्येन, अतोऽत्रैव निवृत्तिर्वरमिति पश्यन्ती श्रुतिर्निववृत इत्यादिकल्पनापि—परास्ता।

शतगुणितबृहस्पत्यानन्दप्रजापत्यानन्दपरिच्छेदेनैव निवृत्त्यौचित्येन "ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः" इति मीमांसावशेषस्यासाङ्गत्यापत्तेः। नहि शतगुणितत्वेन ब्रह्मानन्देयः

त्तापरिच्छेदः, तत्रैव निवृत्तिश्चेति सुश्लिष्टं वचः; व्याहतत्वात्। अप्राप्य निवृत्तिर्हि महाभाष्यस्य लेशतोऽप्यपठन एव—देवदत्तो महाभाष्यपठनपर्यन्तं प्रवृत्तोऽप्राप्यैव तं मनोरथं निवृत्त इत्यादौ दृश्यते, नतु महाभाष्यपठनेऽपि प्रवृत्त्यनन्तरम्। तथाचात्रापि ब्रह्मानन्दस्य लेशतोऽप्यमीमांसयैव यद्यानन्दमीमांसा निवृत्ता स्यात्, तदैव—"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहे"तिवाक्यमुपपद्येत, नतु "स एको ब्रह्मण आनन्दः" इत्यानन्दपरिच्छेदप्रवृत्त्यनन्तरमपि। अतः—"ते ये शतमि"त्यादिवचस्तत्र प्रवृत्तमेवेति न तस्य कदापि निवृत्तिर्मतान्तरे।

अस्मन्मते तु—सन् घट इत्यादिव्यवहाराणामखण्डब्रह्माविषयकत्वेन तत्र कुण्ठितशक्तिकत्वाद् अखण्डानन्दं ब्रह्माप्राप्य "यतो वाचो निवर्तन्ते" इत्युपपन्नतरम्।

> एतेन—कस्यचिद् ब्रह्मानन्दतत्त्वं जिज्ञासमानस्य केनचित् प्रमाणाभासेन तस्य शतगुणितप्राजापत्यानन्दत्वं भ्राम्यतो ब्रह्मानन्दपरिच्छिन्नत्वव्यवहारसंभवात् तन्निवर्तकत्वेन "यतो वाचो निवर्तन्ते" इत्यस्य सार्थक्यमिति शङ्कापि—परास्ता।

श्रौतस्य शतगुणितप्राजापत्यानन्दत्वस्य ब्रह्मसम्बन्ध्यानन्दे ज्ञातस्य भ्रान्तत्वकल्पनायां श्रुतिबाधाद्यापत्त्या तन्निरासकतया "यतो वे' तिवाक्यसार्थक्यासंभवात्, "यतो वाचः" इति वाक्येऽसंकोचेन सर्वेषां शब्दानां मुख्यवृत्त्या ब्रह्मण्यप्राप्य निवृत्तेरवगताया बाधेनानन्देयत्तावाङ्मात्रनिवृत्तिपरतया संकोचस्यायोगाच्च। न ह्यसंकोचेनान्वये संकोचो न्याय्यः।

वस्तुतस्तु—शतगुणितानन्दरूपेणापरेषामानन्दानां पूर्वपूर्वेषामपेक्षयाऽऽनन्दान्तरोपक्षेपक्रमभङ्गेनैव ब्रह्मसम्बध्यानन्दे तदियत्तापरिच्छेदकवाङ्मनसाप्रवृत्तिरर्थतः सिद्ध्यति, इति कथं ब्रह्मानन्दा-

पेक्षया शतगुणानन्दान्तरसत्त्वशङ्काया अवसरलेशोऽपि, इति व्यर्थमेव—"यतो वाचो निवर्तन्ते" इति वाक्यजातम्; "आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचने"ति वाक्यांशेनैव निरपेक्षबोधसंभवात्। परमार्थतस्तु—"यतो वाचः" इति वाक्यस्य नानन्देयत्ताऽपरिच्छेदार्थत्वम्, किन्तु प्राप्यब्रह्मस्वरूपप्रतिपत्त्यर्थत्वमेवेत्युत्तरत्र स्फुटीभविष्यति।

एतेन—'असन् घटः' 'ब्रह्मणि प्रपञ्चोऽध्यस्तः' 'ब्रह्मभिन्नं मिथ्या' 'निर्विशेषं ब्रह्म' 'अद्वैतमेव तत्त्वम्' इत्यादिवाचोऽपि—व्याख्याताः; प्रथम-द्वितीय-तृतीयवाक्यानां सद्रूपेण ज्ञातस्य ब्रह्मण एव बोधनेन निर्विशेषाखण्डब्रह्मणोऽबोधनेन, तुरीय-पञ्चमवाक्याभ्यामपि विशेषनिषेधमुखेन बोधनेनेदन्तया ब्रह्मणोऽबोधनेन च निर्विशेषब्रह्मणो वाङ्मात्रागोचरत्वं ह्युपपद्यते। नहि शुद्धं ब्रह्म शास्त्रप्रतिपाद्यम्, किन्तूपहितमेवेति भामतीसिद्धान्ताच्च।

> एतेन—अद्वैतमतेऽपि संकोच आवश्यकः; 'असन् घटः' 'ब्रह्मणि प्रपञ्चोऽध्यस्तः' 'ब्रह्मभिन्नं मिथ्ये'त्यादिनां वाक्पदेनाग्रहणादित्यादि—परास्तम्।

किञ्चिद्रूपेण ज्ञातत्वेऽपि किञ्चिद्रूपेणाज्ञातस्यैव वस्तुगत्या सत्यस्याधिष्ठानत्वेनाखण्डरूपेण न तेषु वाक्येषु ब्रह्म विषयीक्रियते। न ह्यखण्डरूपेण ब्रह्मग्रहणदशायां ब्रह्मभेद-प्रपञ्च-तन्मिथ्यात्वादीनां बोधः संभवदुक्तिकः।

वस्तुतस्तु—वाचां न ब्रह्मणि प्राप्तिरित्येवात्र वाक्यार्थः। एतासां च वाचां सविकल्पकज्ञानजनकत्वस्यौत्सर्गिकत्वात् तादृशीनां सर्वासां वाचां परोक्तरीत्यैवाखण्डाकारप्राप्त्यपेक्षया प्रवृत्तेरेवायोगात् अप्राप्य निवर्तन्ते इति सुष्ठूपपन्नम्। भ्रम-प्रमासाधारण्येन सर्वेषां शब्दानामखण्डब्रह्मगोचरत्वायोगेनासंकोचेनैव वाक्पदस्यान्वयात्।

यद्यपि—"तत्त्वमसि" अहं ब्रह्मास्मि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवचसां ब्रह्मणि प्रवृत्तिर्वर्तते, तथापि न मुख्यवृत्त्या तत्र प्रवृत्तिरिति मुख्यवृत्त्या शुद्धब्रह्मणि कस्यापि वचनस्य न प्राप्तिरिति न कोऽपि दोषः।

एतेन 'तत्त्वमसि' 'सत्यं ज्ञानम्' इत्यादीनामपि ब्रह्मणो निवृत्तिर्हि दुर्वचा ; अन्यथा केनापि प्रमाणेन ब्रह्मणो दुःसाधनतया शून्यवाद एव पर्यवसानं स्यादित्यादि—परास्तम्। तत्त्वमसीत्यादीनामप्युपहितब्रह्मपरत्वस्यैव स्वीकारेऽपि स्वत एव सिद्धत्वाद् ब्रह्मणो न शून्यवादापत्तिरिति हि भामतीसिद्धान्तः। व्यक्तं चेदमद्वैतसिद्ध्यादौ जडत्वनिरुक्तिप्रकरणे, इति तत एवाधिकमवगन्तव्यम्। परमार्थतस्तु वाक्पदेनाखण्डब्रह्मेतरवाच एव विवक्षिताः, नतु ब्रह्मवाचोऽपि ; व्याघातात्।

एतेन—सगुणवाक्यान्यपि—व्याख्यातानि; तेषां यथावस्थितस्वरूपसमर्पकत्वाभावात्, गुणानां तत्तद्वाक्यावगतानाम्—"अथात आदेशो नेति नेति" इत्यादिवाक्यैरयथावस्थितत्वावगमात्। अत्रादिपदेन—'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने' ति वाक्यांशोऽपि गृह्यते। सति चैवं 'यतो वाचः' इत्यस्याखण्डब्रह्मेतरवाचां सर्वासां ब्रह्मणि न प्राप्तिः। अतश्च ततो निवृत्तिः; सगुणवाचां लौकिकवागन्तराणां च यथावस्थितनिर्विशेषाखण्डस्वरूपबोधकत्वासंभवादिति पर्यवस्यति। यथाचात्रैवार्थे प्रकरणसंशुद्धिः, तथा पूर्वमेव विवेचितम्।

एतेन—कुत्सितां बुद्धिमवष्टभ्याद्वैतादिकमेव तत्त्वं प्रतिपन्नानामयथावस्थितार्थपरा वाचोऽविशुद्धेन मनसा सहैवाप्राप्यैव यतो निवर्तन्ते, तस्य ब्रह्मण आनन्दं विद्वान् न बिभेतीत्यर्थ इति व्यवस्थापि—परास्ता ; आनन्दस्यावाङ्मनसगोचरत्वोपपादनार्थतयाऽभिमतस्यास्य ब्रह्मणोऽवाङ्मनसगोचरत्वव्यवस्थापनपरतया नयनेन पूर्वापरविरोधात्, ब्रह्मरूपत्वे त्वानन्दस्याभ्युपगम्यमाने आनन्दस्य ब्रह्मधर्मत्वपक्षपरित्यागाद्

अद्वैतमत एव प्रवेशात्, अयथावस्थितार्थपराणां वाचामविशुद्धस्य च मनसो ब्रह्मरूपानन्दमप्राप्य निवृत्तेरद्वैतिनामपि सम्मतत्वात्, सगुणब्रह्मप्रतिपादनार्थानां वाचां वाक्पदेन ग्रहणे तासां ततो निवृत्ति-वर्णनायोगात्, निर्गुणवाक्यानामपि सगुणपरत्वस्यैव भवदभिमतत्वेन ततो निवृत्त्ययोगाच्च। कुत्सितबुद्ध्यवलम्बनेनेवाद्वैतप्रतिपत्तिघोषणा तु शिवद्रोहतात्पर्येणैव, न वस्तुगत्या।

एतदुक्तं भवति—विदुषो ब्रह्मप्राप्तिर्गतिनिरपेक्षेति बोध-नार्थं ब्रह्मण एव प्रपञ्चभावं जीवस्वरूपत्वम्—"स यश्चायं पुरुषे, यश्चासावादित्ये स एकः" इति जीव-ब्रह्मणोरुपाधिविलयेऽत्य-न्ताभेदं च प्रतिपाद्य जीवाभिन्नब्रह्मज्ञानिनोऽन्नमयादिप्राप्तिर्यथा गतिनिरपेक्षा, एवं ब्रह्मभावोऽपि गतिनिरपेक्ष इति बोधनार्थ-मन्नमयाद्यानन्दमयान्तस्योपसंक्रमितव्यत्वं प्रतिपाद्य च प्रवृत्तमिदं वाक्यजातम्—"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" ति। अनेन च यादृशब्रह्मभावो मोक्षः, यदनन्तरमभयं प्रतिष्ठां विन्दते, तादृशानन्दरूपाखण्डब्रह्मणि सर्वासां वाचां न प्रवृत्तिः। तस्य हि केवलं मौनव्याख्ययैव प्रकटीकरणसंभवः, नत्विदन्तया वाक्य-विशेषेण तत्प्रकटीकरणसंभवः, इति प्राप्यं ब्रह्म प्रस्तुतमेव—"तदप्येष श्लोको भवती" त्युपक्रम्य प्रवृत्तेन "यतो वाचो निवर्तन्ते" इति वाक्येन तात्पर्यतो विषयीक्रियते। तथाच—"तदप्येष श्लोको भवती"त्यनेन तस्मिन् प्राप्ये ब्रह्मणि प्रस्तुत एष श्लोको भवतीत्येव विवक्ष्यते। सति चैवं भवन्मत इवास्मन्म-तेऽपि—"अथ सोऽभयं गतो भवती" ति प्रस्तुताया अभय-प्राप्तेरेव ब्रह्मप्राप्तिरूपायाः प्रपञ्चनं "यतो वाचो निवर्तन्ते" इति श्लोकः श्लोकयति। अयं च श्लोकोऽभयप्राप्तिरेव ब्रह्मप्राप्तिरिति श्लोकयन् भयनिमित्तद्वैताभावमपि ब्रह्मण्यर्थसिद्धं बोधयति, इति ब्रह्मणोऽवाङ्मनसगोचरत्वप्रतिपादनमिदं ब्रह्मणि प्रपञ्चाप-

वादमपि सिद्धवत्करोतीति वक्तव्यम् । अत्र—"न विभेति कुतश्चने" ति कुतःशब्दस्वारस्यं ब्रह्मव्यतिरिक्तस्य कस्यापि भयनिमित्तस्य ब्रह्मप्राप्तिदशायामभावबोधन एव संभवति ।

एतेन—भयहेतूनां सकलपुण्यपापरूपकर्मणां निरवशेषमुन्मूलिततया सकलसांसारिकभयनिवृत्तिपूर्वा ब्रह्मप्राप्तिरेवात्र विवक्षितेत्यादिव्यत्रस्थापि—परास्ता ।

तदेवं प्रपञ्चमिथ्यात्वस्य ब्रह्मनिर्विशेषत्वस्य चैव तैत्तरीयोपनिषदर्थत्वाद् ब्रह्मसप्रपञ्चतायामेव "यतो वाचो निवर्तन्ते" इत्यादिवाक्यतात्पर्यमिति वादो निरवकाशीकृतः ।

इदमेवाभिप्रेत्योक्तं सिद्धान्तसिद्धाञ्जने—"यतो वाच इत्यस्य—ब्रह्मणि प्रवृत्ते वाङ्मनसे सर्वप्रवृत्तिनिमित्तमृषात्वादेव तदेवाप्राप्य निवर्तन्ते इत्येवार्थः, ब्रह्मानन्दमभिदधाना एव वाचस्तदियत्तामप्राप्य निवर्तन्ते इत्यर्थेऽध्याहारप्रसङ्गात, प्रवृत्तिनिवृत्त्योरेकनिरूप्यत्वस्वारस्यं परित्यज्य भिन्ननिरूप्यत्वकल्पनाप्रसङ्गाच्चे" ति ।

अयं भावः—यच्छब्दस्य तच्छब्दावधिकार्थद्योतकत्वस्य "यो विद्वान् स दीक्षितः" इत्यादौ दृष्टत्वात् येन रूपेण ब्रह्मणः सन् घट इत्यादिव्यवहारतः प्राप्तिः, तादृशस्य सद्रूपस्य ब्रह्मण एव यतो-ब्रह्मशब्दाभ्यां ग्रहणम्, नत्वखण्डानन्दरूपेणापि । तथाच सद्रूपेण ज्ञायमानमपि ब्रह्माखण्डरूपेणाज्ञानाद् न सन् घट इत्यादिव्यवहारेष्वसंकीर्णमवभासते, इति सन् घट इत्यादिव्यवहारा ब्रह्माप्राप्य निवर्तन्ते, अखण्डरूपे तु ब्रह्मणि श्रवण-मनन-निदिध्यासनसंस्कृतान्तःकरणमात्रगोचरत्वादसंस्कृतमनसो वाचां च न तत्र प्रवृत्तिः । सति चैवं सन् घट इति व्यवहारा ब्रह्मप्राप्तीच्छया प्रयुज्यमाना अपि कथमपि ब्रह्म सद्रूपेण संस्पृशन्तोऽपि न पूर्णरूपेण तद् गृह्णन्ति, इति युक्तमाम्नातम्—'अप्राप्य निवर्तन्ते' इति । एवं च श्रुतौ सह-

ञ्शः प्रयुज्यमानेषु ब्रह्मबोधकपदेषु लक्षणाङ्गीकारेणैवोपपत्तिर्वर्णनीया, इति न दोषः। परिच्छिन्नविषयाणां वाचामपरिच्छिन्नब्रह्मविषयत्वं न मुख्यया वृत्त्या भवतीति तु निष्कर्षः।

एतेन—ब्रह्मणः परिच्छिन्नत्वेन वागादिविषयत्वाभावस्य विवक्षणीयत्वेन स्वरूपतः परिच्छेदाभावस्य कालादिसाधारणतयाऽऽनन्दादिगुणद्वारा तदभावस्य तत्र त्रिवक्षा नियता, इति यत इत्यस्यानन्दपरत्वमेवाङ्गीकर्तव्यम्, नतु ब्रह्मपरत्वमित्यादि—प्रत्युक्तम्।

त्रिविधपरिच्छेदाभावस्यात्र विवक्षणेन तस्य कालादिसाधारणत्वाभावाद् आनन्दादिगुणद्वारा तदभावस्याविवक्षणीयत्वात्, ब्रह्मानन्दस्य पूर्वमज्ञातत्वेन यतःशब्देन तत्परामर्शायोगात्, आनन्दप्राचुर्यस्य पूर्वोक्तप्रकारेणाप्रस्तुतत्वेन तदियत्ताभाववर्णनस्यानवसरात्, ब्रह्मधर्मानन्दस्यापि जीवाधर्मत्वेन परिच्छिन्नत्वाद् ब्रह्मणः एव, ब्रह्मरूपस्यानन्दस्य वैव वा यतःशब्दार्थत्वेन ब्रह्मसम्बन्ध्यानन्दस्य यतःशब्दार्थत्वाभावाच्च।

एतेन—ब्रह्माप्राप्य ततो निवर्तन्त इत्यनुपपन्नम्; नहि ग्राममप्राप्य ग्रामाद् निवर्तत इति व्यवह्रियते। ग्रामं गतस्तत्रेप्सितमप्राप्य निवर्तत इत्येव व्यवहारादित्यादि—परास्तम्।

प्रकृतेऽपि ब्रह्म प्राप्य तदीयमानन्दांशमप्राप्य सन् घट इत्यादिव्यवहारो निवर्तत इत्येव विवक्षणेनापि हि न विरोधः। तथाच ब्रह्मण्येव प्रवृत्तः सन् घट इत्यादिव्यवहारो मुख्यवृत्त्या निर्विशेषतत्स्वरूपानभिधानात् ततो निवर्तते, इति तदनभिधानरूपा निवृत्तिर्वाचामर्थसिद्धैव। तथाच ब्रह्मण्येव वाचां प्रवृत्तिस्तत एव निवृत्तिरिति प्रवृत्ति-निवृत्त्योरेकनिरूप्यत्वमपि सिद्ध्यति। मतान्तरे तु ब्रह्मणि प्रवृत्तिः तदीयानन्दाद् निवृत्तिरिति तयोर्भिन्ननिरूप्यत्वप्रसङ्गोऽवर्जनीयः, विशिष्ट-शुद्धयोरत्यन्तभेदानङ्गीकारात् विशिष्टे शब्दानां प्रवृत्तिः, शुद्धाद् निवृत्तिरिति भेदोऽकिञ्चित्करः।

एतेन—नचांशभेदेन प्रवृत्ति-निवृत्त्युभयोपपत्तिः; ब्रह्मणो निरंश-त्वात्, प्रवृत्ति-निवृत्त्योर्भिन्ननिरूप्यत्वप्रसङ्गात्, प्रवृत्त्यधिकरणस्यैव निवृत्त्यपादानताया वक्तव्यत्वेन विशिष्टे प्रवृत्तिः शुद्धाद् निवृत्तिरिति वाक्यार्थासामञ्जस्याच्चेत्यादि—परास्तम्।

विशिष्टं शुद्धाद् नातिरिच्यत इति सिद्धान्तेनोक्तदोषा-प्रसरात्। 'गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकरणत्वा-दि'त्यादिना भेदसामानाधिकरण्योपलक्षिताभेदस्यैव विशिष्ट-शु-द्धयोरङ्गीकारस्य लघुचन्द्रिकायां विस्तरेणोपपादितत्वाच्च।

एतेन—विशिष्ट-शुद्धयोरभेदाद् नासामञ्जस्यमित्यपि मन्दम्; तथासति तत्र प्रवृत्तस्य ततो निवृत्तेरयोगादिति—निरस्तम्; तयोर्भेदाभेदाभ्युप-गमेनाविरोधात्।

तथाच ब्रह्मणि प्रवृत्ते वाङ्मनसे अखण्डब्रह्माविषयीकरणात् ततो निवर्तेते, प्रवृत्तिनिमित्तस्य तत्राभावादित्येव "यतो वाचो निवर्तन्ते" इत्यादिवाक्यार्थः, नतु आनन्देयत्तामप्राप्य ब्रह्मणो निवर्तन्ते इति, प्रवृत्ति-निवृत्त्योर्भिन्ननिरूप्यत्वापत्तेः, इयत्तादिपदा-ध्याहाराच्च।

यथाच—"अप्राप्येति पदं नेयत्तामपेक्षते, तथा पूर्वमेवोप-पादितम्।

एतेन—अप्राप्येत्येतदाकाङ्क्षिततया यत्किञ्चित्पदाध्याहार आवश्यक इति—प्रत्युक्तम्; निवृत्त्यपादानस्यैवाप्राप्यकर्मत्वेन तदनावश्यकत्वात्।

तथाचानन्दमयब्रह्मतावादे तत्पर्यायगतस्य—"तस्य पुरुषविधताम् अन्वयं पुरुषविधः" इत्यस्यानन्वयापत्तिरपि दुष्परिहरं दूषणम्। अतोऽपि ज्ञायते—यदानन्दमय-ब्रह्मणोरत्यन्तमेव भेदोऽत्र विव-क्षितः, इति पुच्छब्रह्मवाद एव स्वरसः।

एतेन—काल्पनिकावयवावयविभावनिबन्धन आनन्दमय-ब्रह्मणोर्भेद इति—परास्तम्; स्वस्मिन्नेव स्वावयवत्वकल्पनाया निर्मूलत्वात्।

एतेन—घटात् पटस्येवानन्दमयाद् ब्रह्मणोऽत्यन्तभेदाभावेऽप्यभेदसहिष्णोरंशांशिभावनिबन्धनभेदस्याङ्गीकार इति—प्रत्युक्तम्।

यथाचानन्दमय-ब्रह्मणोर्नाकारभेदस्तथा पूर्वमेव विवेचितम्; अन्यथाऽऽनन्दमयाकारस्य ब्रह्माकारातिरिक्तत्वे ज्ञेयत्वेन प्रक्रान्तं ब्रह्म कथमानन्दमयपदेन प्रतिपाद्येत? इति पुच्छब्रह्मवाक्येनैव तत्समर्पणं कर्तव्यं समापततीति घट्टकुट्यां प्रभातं स्यात्। "ब्रह्मविदाप्नोति परमि"ति प्रस्तुतस्य ब्रह्मणो गुहानिहितत्वेन कोशान्तरत्वनिरूपणार्थं ह्यानन्दमयादीनां पुरुषविधत्वकीर्तनम्, नतु शरीराकारतानिरूपणार्थम्; शरीराकारतया तज्ज्ञानस्य मोक्षसाधनत्वेनाप्रक्रमात्॥

एतेन—पूर्वपर्यायोक्तपुरुषविधत्वमनुसृत्यानन्दमयोऽपि पुरुषविध इत्युक्तौ तद्वस्य शिरआदिकं किमित्यपेक्षायां "तस्य प्रियमेव शिरः" इत्येवंरीत्या श्रुतिप्रवृत्तिरित्यादिकमपि—परास्तम्; तस्य परमात्मतायां पुरुषविधत्वनिरूपणस्यैवायोगात् तद्वैयर्थ्यापत्तेः।

तदिदं सिद्धम्—अन्नमयाद्यानन्दमयान्ताः कोशाः पञ्च, पुच्छं ब्रह्म तु तदन्तरं ज्ञेयं ब्रह्म, यद् विद्वान् सर्वान् कामान् युगपदश्नुते इति सन्दर्भपरिशुद्धिः।

अत एव—"अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्तामि"त्यन्नमयादीनामिवानन्दमयस्यापि मदीयतयोल्लेखेन शरीरत्वमाम्नायमानमुपपद्यते, मतान्तरे तु आनन्दमयस्यैव सर्वान्तरत्वेन मुख्याहमर्थत्वात् ममानन्दमय इत्यनन्वितं स्यादिति प्रकृतवाक्ये 'मे' शब्दस्यानन्दमयशब्देनानन्वयापत्तिरपि दुरपह्नवं दूषणम्। अनेन हि विज्ञायते—आनन्दमयस्यापि प्राणमयादेरिव कश्चिदन्तरात्मा वर्तते, यो मुख्य आत्मेति। सति चैवमन्नमयादीनां यादृशं शोध्यत्वम्, तादृशमेवानन्दमयस्यापि, अन्यथा मेपद-शुद्ध्यन्तांपदयोरानन्दमयेन सम्बन्धावसरेऽर्थान्तरम्, अन्नमयादिभिः सम्बन्धावसरे

रेऽर्थान्तरमिति सत्कृत्प्रयुक्तस्यैव पदस्यार्थवैरूप्यमङ्गीकरणीयं स्यात्, इति प्रकृतवाक्ये मेपद-शुद्ध्यन्तांपदयोरंशभेदनार्थवैरूप्यमपरमपरिहरणीयं दूषणम्।

वस्तुतस्तु—"अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्ताम्" इत्यत्रानन्दमयपदेन परमात्मग्रहणे तदन्वययोग्यशुद्धिप्रार्थनाया न संभवलेशोऽपि; नित्यशुद्धे परमात्मन्यशुद्धेरसंभवात्, अप्रसादस्यात्रानन्दमयमात्रसम्बन्धापेक्षयाऽशुद्धिपदवाच्यत्वकल्पनेऽपि परमात्मनि स्वापेक्षया नित्यप्रसन्नेऽप्रसादस्याप्यसंभवाच्च। जीवापेक्षया "लोकवत्तु लीलाकैवल्यम्" इति न्यायेन प्रसादोऽप्रसादो वा वैषम्य-नैर्घृण्यवारणार्थं तत्तत्कर्माधीनः फलोत्पत्त्या स्वयमेव नश्यतीति नोक्तविधाशुद्धिविनाशेन शुद्धिप्रार्थना सफला।

यत्तु—निवृत्त्युक्त्यैव तत्र प्रवृत्तेरर्थसिद्धतया नाध्याहारापेक्षेति वर्णनम्, तदिदं मतान्तरे प्रवृत्ति-निवृत्त्योर्भिन्ननिरूप्यत्वस्वीकाराद् न संभवदुक्तिकम्।

एतेन—अस्मन्मतेऽपि प्रवृत्ति-निवृत्त्योरेकनिरूप्यत्वमेवाभ्युपगम्यते। देवदत्तो यज्ञदत्तान्वेषणाय ग्रामे प्रवृत्तस्तत्र तमलब्ध्वा तस्माद् निवृत्त इतिवद् ब्रह्मानन्दावधिलाभायानन्दे प्रवृत्ता वाक् तामलब्ध्वा तस्माद् निवर्तत इत्यभ्युपगमे तयोरेकनिरूप्यत्वानपायादित्यादि—परास्तम्।

उक्तदृष्टान्तबलेन प्रकृतेऽपि ब्रह्मणि आनन्दान्वेषणया प्रवृत्तस्तत्र तमप्राप्य ततो निवर्तत इति यद्यर्थो विवक्ष्यते, तर्हि यतःशब्देन ब्रह्मण एव ग्रहणापत्त्या पूर्वापरविरोधः। यद्यानन्दे प्रवृत्ता वाक् तमप्राप्येत्यर्थो विवक्ष्यते, तर्हि "ग्राममप्राप्य ग्रामाद् निवर्तते" इतिव्यवहारादिति पूर्वोक्तिविरोधः।

वस्तुतस्तु—न ब्रह्मानन्देयत्तालाभायानन्दमीमांसा प्रवृत्ता, किन्त्वानन्दस्वरूपनिर्धारणाय। अत एव "सैषाऽऽनन्दस्य मीमांसा

भवती''ति केवलानन्दपदमेवाऽऽम्नायते, नतु ब्रह्मानन्दस्य मीमांसा भवतीति।

तथाच ब्रह्ममीमांसैवात्राऽऽनन्दमीमांसेति स्वीकरणीयत्वात्, आनन्दपदेन ब्रह्मण एव ग्रहणीयत्वात् आनन्दमयपदं जीवपरमेव, न ब्रह्मपरमिति स्वीकर्तव्यम्। आनन्दानन्दमययोरत्र प्रकरणे बहुशो भेदव्यपदेशात्, इति नानन्दमये तैत्तरीयोपनिषदः पर्यवसानम्, किन्तु तस्याप्यधिष्ठाने पुच्छब्रह्मण्येव तत्पर्यवसानम्। सति चैवमानन्दमयब्रह्मत्वे दोषबाहुल्यात् पुच्छब्रह्मवाद एव सूत्राणां स्वारस्यस्य सहृदयसाक्षिकं प्रतीतेश्च पुच्छं ब्रह्मैव परमात्मेति पक्ष एव सूत्रानुसारिभिः प्रमाणशरणैरास्थेय इति सिद्धम्।

तदिदं सिद्धम्—यत् नानन्दमय-ब्रह्मणोरभेदः संभवति; ऋक्सामादीनां मनोभिन्नत्वेनान्नमयेऽपि शिरःप्रभृतीनां देहस्य चावयवावयविभावप्रयुक्तभेदसत्त्वेन प्रकरणस्य स्वस्मादनतिरिक्तैः शिरःपक्ष-पुच्छत्वरूपणासंभवात्। तस्मात्—"ब्रह्म पुच्छमि''ति स्वरसतः प्रतीयमानानन्दमयभेदो ब्रह्मणि न त्यक्तुं योग्यः। सत्यमन्नमयपर्यायेऽवयवावयविनोस्तादात्म्यात् स्वानतिरिक्तस्यैव पक्षत्वादिना निर्देशो दृश्यते; तथापि भेदगर्भाभेदस्यैव तत्र स्वीकारादत्यन्ताभिन्नशिरःपक्षादिमत्त्वं कुत्रापि पर्याये न दृष्टमिति सर्वसम्मतमिदम्।

एतेन—उपक्रमेऽन्नमयपर्याये स्वस्मादनतिरिक्तस्यावयवानामेव पक्षादित्वरूपणदर्शनेनानन्दमयपर्यायेऽपि तथाऽभ्युपगमो न दोषायेति शङ्कापि—परास्ता।

अङ्गीकृतं हि भवतैव—"अवयवावयविनोर्न घट-पटयोरिवात्यन्तं भेदः, नापि घट-कलशयोरिवात्यन्तमभेदः'' इत्यादि प्रकृतप्रकरणे वदता नात्यन्ताभेदोऽन्नमय-शिरःप्रभृतीनां सम्भवतीति।

तथाचानन्दमय-ब्रह्मणोरत्यन्ताभेदाभिप्रायेण पुच्छवाक्ययोजनं प्रक्रमविरुद्धम्, अस्मन्मते तु जीव-ब्रह्मणोरपि भेदाभेदस्वीकारात् आनन्दमयपदेन जीवस्य पुच्छवाक्येन परमात्मनश्च ग्रहणात् सुष्ठु, प्रक्रमान्तरानुगुणं योजनम्। एतेन प्राणमयपर्यायोऽपि—व्याख्यातः; तत्रापि हि भेदगर्भाभेदवत एव शिरःपक्षादेर्ग्रहणम्, नात्यन्ताभिन्नस्य। मनोमयपर्याये तु यजुरादीनां मन्त्राणां मनोमयादत्यन्तभिन्नत्वान्नानतिरिक्तैः शिरःपक्षादिभी रूपणं संभवदुक्तिकमपि। यजुरादिपदानि तत्तत्प्रतिपाद्यार्थविषयकज्ञानजनकमनोव्यापारपराणीति भवत्पूर्वाचार्यविवरणादरेऽपि तु नात्यन्ताभेदः प्रामाणिकः; मनोमय-मनोव्यापारविशेषाणामत्यन्ताभेदायोगात्। एतेन—मनोमयशब्दो मनःसहितवागिन्द्रियपरः, ऋगादयश्च तदंशा इत्यपि—व्याख्यातम्। विज्ञानमयपर्यायेऽपि श्रद्धा-सत्यादीनां ज्ञानविशेषरूपत्वेऽपि भेदगर्भ एवाभेदः, नात्यन्ताभेद इति स्थिते आनन्दमयपर्यायमात्रेऽत्यन्ताभिन्नेन ब्रह्मणा पुच्छरूपणं प्रक्रमविरुद्धं भवतीत्यानन्दमयपदं जीवपरमेव युक्तम्, न ब्रह्मपरम्।

एतेन—आनन्दमयपर्यायेऽपि प्रधानानन्दमयानतिरिक्तानामेव शिरस्त्वादिना रूपणम्; ब्रह्मणो बहुविधसुखविशेषसंभवेन तत्तत्सुखविशेषरूपधर्म एव हि शिरस्त्वादिना रूप्यते। प्रियादिसुखविशेषाश्रयभूतं ब्रह्मैवानन्दमयपदवाच्यम्, ब्रह्मैवाधारत्वेन पुच्छमिति रूप्यत इत्यादि—परास्तम्; आत्यन्ताभिन्नयोर्घट-कलशयोरिव काल्पनिकभेदस्याप्यभावेन पुच्छत्वरूपणासंभवात्।

नहि घटत्वेन कलशत्वेन च घट-कलशयोर्भेदः संभवति, येनानन्दमयत्वेन ब्रह्मत्वेन च विवेककल्पनं साधीयः स्यात्, आनन्दमय-ब्रह्मपदयोर्भवद्भिः पर्यायत्वाङ्गीकारात्। अत एव आनन्दमयस्यापि विज्ञानमयपुरुषविधता देहाकारता—"तस्य पुरुषविधताम् अन्वयं पुरुषविधः" इत्यनेनोपपद्यते। मतान्तरे त्वानन्दमयस्य

चिदचिच्छरीरकपरमात्मतास्वीकारात् शरीराकारतावर्णनमत्यन्तमेवानुपपन्नम्। अनेन तु विज्ञायते—यत् अन्नमयादय इवानन्दमयोऽपि कोशरूप एव, नतु सर्वकोशान्तरः परमात्मेति। "काम एष क्रोध एषः" कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः" इति स्मृति-सूत्र-तद्भाष्यादिभिरिच्छाकृत्योः पुरुषकारप्राबल्यस्यावगतत्वेनेश्वरेच्छायाः तत्प्रसादस्य तदप्रसादस्य वा प्रयत्नपर्यन्तानधिकाराच्च ; अन्यथा हि विधिप्रतिषेधमोक्षादिशास्त्राणि वितथानि समापद्येरन्। इदमेवाभिप्रेत्योक्तं न्यायरक्षामणौ—"ब्रह्मणः पूर्वमप्रसाद्यत्वरूपमशुद्धत्वं न संभवति; अन्यथा नित्यशुद्धत्वश्रुतीनां संकोचप्रसङ्गात्"—इति।

एतेन—शुद्धत्वश्रुतीनां संकोचस्त्वधिकारिविशेषविषये भगवतो निग्रहानुग्रहबोधकप्रमाणाधीन इत्यादि—परास्तम् ; भगवतो निग्रहानुग्रहयोरस्मत्कर्माधीनत्वेन स्वतस्तस्येतरविषये निग्रहानुग्रहविनियोगायोगात्। तदुक्तम्—"वैषम्य-नैर्घृण्ये न सपेक्षत्वात् तथाहि दर्शनम्" इति।

सति चैवमन्नमयादय इवानन्दमयोऽपि कोश इति पक्ष एव समुचितः। तस्मिन्नेव पक्षे—"तस्य पुरुषविधतामन्वयं पुरुषविधः" "अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुध्यन्ताम्" इत्यादिवाक्यसार्थक्यसंभवात्। कोशनिरूपणे हि पुरुषविधत्वनिरूपणापेक्षा, नतु सर्वकोशान्तर-सर्वशरीरिपरमात्मनिरूपणे।

तत्र चानन्दमयस्याप्यन्तरः परमात्मा यदि पर्यायान्तरोपक्रमेणोपदिश्येते, तर्हि पर्यायान्तरेऽपि पूर्वतनपर्यायसारूप्यान्वेषणे क्रियमाणे तस्यापि कोशत्वापत्तिरिति गुहाप्रकरणसमापनेन गुहानिहितप्रकरणान्तरे उपक्रान्तव्ये सति तन्त्रेण "ब्रह्म पुच्छं प्रतिष्ठे" ति वाक्येनैव गुहानिहितब्रह्मप्रकरणमप्यारभते श्रुतिरिति शङ्करभगवत्पादानुयायिनो मन्यन्ते। गुहानिहितोपदेशार्थमनुषङ्गत एव हि गुहाप्रकरणम्, नतु प्रधानतया, इति गुहाप्रकरणान्तेनैव गुहा-

निहितप्रक्रमोऽपि श्लिष्टतम एव। यद्यपि प्राणयादिपर्यायेषु सर्वेषु प्रतिपर्यायं गुहानिहितमपि प्रक्रम्यत एव; तथापि सर्वे पर्यायाः न पर्यवस्यन्ति तत्रैव; पर्यायान्तरोपक्रमात्। तथाच यद्यानन्द-मयादन्यस्यानुपदेशः, तर्हि आनन्दमयो गुहानिहितो भविष्यति; परं तु—"अन्योऽन्तर आत्माऽऽनन्दमयः" "तदप्येष श्लोको भवती"त्येवमेव श्रुतिप्रवृत्तिर्योग्या स्यात्, नतु "तस्य पुरुषविधतामि"त्यादिपूर्वतनपर्यायसाधारण्येन। वर्तते ह्यत्रानन्दमयस्याप्यन्तर आत्मोपदिष्टः, यमधिकृत्य—"तस्यैष एव शारीर आत्मा। यः पूर्वस्ये" त्याम्नायते। इयान् विशेषः—यत् पूर्वतनपर्यायेषु—तद्वाक्यानन्तरम्—"तस्माद्वा एतस्मादि" ति स्पष्टमन्य आत्मोपदिश्यते, अत्र तु "तस्माद्वा एतस्मादि" निशैल्याऽऽत्मान्तरस्यानन्तरमप्यनुपदेशात् आनन्दमयपर्यायशेषेणैवानन्दयस्याप्यन्तर आत्मोपदिष्ट इति निश्चीयते। तथाचान्तिमोऽयं पर्याय इति पूर्वतनपर्यायादृतशैलीपरित्यागेन श्रुतिः प्रववृते।

नहि यया शैल्या यद्वस्तूपदेशः प्रक्रम्यते, तयैव शैल्या तदुपदेशः समापनीय इति नियमः; "अस्ति वाव वाचो भूयः" इति भूयःप्रश्नोत्तरपरम्परया प्रक्रान्ताया भूमविद्याया "एष तु वा अतिवदति यस्सत्येनातिवदती"ति भूयःप्रश्नपरित्यागेन प्राणादधिकस्य सत्यस्योपदेशेन प्रवृत्तिदर्शनात्। तदुक्तं न्यायरक्षामणौ—"भूमविद्याप्रकरणे प्रश्न-प्रतिवचनाभ्यां तदधिकप्रतिपादनशैल्याः प्राण एव समापनेऽपि तुशब्दश्रुति-प्राणोत्पत्तिलिङ्गाभ्यां सत्यस्य प्राणादर्थान्तरत्वम्—"एष तु वे"त्यादेर्यथाऽवगम्यते, तथेहापि "तस्माद्वा एतस्मादन्योऽन्तर"इति शैल्या आनन्दमय एव समापनेऽपि पूर्वोक्तैः प्रमाणैर्ब्रह्मणस्तस्मादप्यर्थान्तरपरत्वं "ब्रह्म पुच्छम्" इत्यस्याभ्युपगन्तुं युक्तम्; वैषम्याभावात्—इति।

अयमाशयः—यथाहि भूमविद्याया हठादेव प्रश्न-प्रतिवचन-शैल्याः प्राणे समापनेऽपि न तत्रैव पर्यवसानम् ; प्राणोत्पत्त्यादिलिङ्गात, "एष तु वे"तितुश्रुतिबलाच्च प्राणादन्यस्योपदेशप्रतीतेः, एवमत्राप्यन्नमयादौ हठादेव—"असन्नेव स भवति" इति पुच्छब्रह्मपरामर्शेन श्लोकस्य प्रवृत्तत्वात् "तस्यैष एव शारीर आत्मेति" वाक्यशेषेणोपदेशप्रणाल्याः समापनात् मयट्परित्यागेन केवलानन्दशब्देनैवोपर्युपदिष्टस्य ब्रह्मणो निर्देशाच्चानन्दमयादर्थान्तरस्यानन्दरूपस्यैव ब्रह्मण उपक्षेपोऽवगम्यते, ति नानन्दमयब्रह्मतायामेव श्रुतितात्पर्यम् । नहि कुत्रापि मयडन्तानन्दमयपदं ब्रह्मपरं मन्यते श्रुतिषु। "सुषुप्तस्थान एकीभूत आनन्दमय आनन्दभुक्" इत्यत्राप्यानन्दमयपदं सुषुप्त्यवस्थामादाय प्रवृत्तत्वात् जीवपरमेव, नेश्वरपरम् । "एष सर्वेश्वरः" इतिवाक्यशेषे तस्य सर्वेश्वरत्ववचनं तु समष्टिरूपापेक्षया तस्य तेनाभेदमादायैवेत्यादिकं व्यक्तमन्यत्र सिद्धान्तलेशसंग्रहादौ ।

एतेन—भूमविद्यायां हि पूर्वमनुक्तस्यातिवादित्वस्य प्राणविषय उक्त्या प्राण एव प्रक्रान्त आत्मेति मन्वानस्य तूष्णींभावे तदभिप्रायवेदिन आचार्यस्य स्वयमेव तस्मादप्यर्थान्तरभूतसत्यस्योपक्षेप इति प्रक्रान्तशैलीभङ्गः प्रसक्तो युक्तः, अत्र तु सर्वान्तरतयाऽऽत्मन उपपादनाय प्रवृत्ततया "तस्माद्वा एतस्मादन्नमयादिति" रीतेः प्रकरणे सर्वान्तत्वेनात्मत्वं यस्य प्रतिपिपादयिषितम् , तत्रैव समापनीयतया विना प्रबलकारणमन्यत्र वस्तुनि तत्समापनमयुक्तमित्यादि—परास्तम् ; पूर्वोक्तैः प्रबलकारणैरत्रापि पुच्छब्रह्मण एवोपदेशपरम्परायास्समापनस्य योग्यतया वैषम्यलेशस्याप्यभावात् । अत एव—"ब्रह्म पुच्छं प्रतिष्ठे"तिपर्यायान्तरेष्वनुक्तस्य ब्रह्माधारत्वस्यानन्दमयपर्यायमात्रे निर्देश उपपद्यते ।

अनेन हि ज्ञायते—यद् ब्रह्मनिरूपणं परस्सहस्रैस्तादृशपर्यायैरपि न शक्यम्, यत्किञ्चिच्छिरःप्रभृत्यादिकत्वेन तस्य निर्विशेषस्य दुर्निरूपत्वात्। सति चैवं सर्वाधारतया पुच्छत्वेन निर्देशेनैव प्रक्रान्तशैली समापनीया, येन सर्वे इमे पर्यायाः गुहापदार्थकोशनिरूपणार्था एव, गुहानिहितपदार्थनिरूपणार्थं नैतादृश्युपदेशपरम्परा युक्ता; तस्यैकरूपस्य निर्विशेषस्य च शिरः-पक्षादिद्वारा निरूपणासंभवेन पृथगेव—"असन्नेव स भवती"त्यादिरूपेणोपदेशस्य योग्यत्वादिति फलति।

तथाच कस्मिंश्चित् पुच्छ आनन्दमयस्य निर्देष्टव्ये ज्ञेयं प्रधानतमं ब्रह्मैव यदि निर्दिश्यते, तर्हि सर्वान्तरात्मनिरूपणार्थं पर्यायान्तरानपेक्षाऽर्थसिद्धा भवति। सति चैवमानन्दमयपर्यायेणैव सर्वान्तरोपदेशसमापनं मतद्वयसंप्रतिपन्नम्। इयान् विशेषः—

यत् आनन्दमयवाक्यं श्रीभाष्यकाराणां मते ब्रह्मबोधकम्, अद्वैतमते तत्पर्यायगतपुच्छब्रह्मवाक्यं ब्रह्मपरमिति। पुच्छशब्देन ब्रह्मणोऽप्राधान्यं तु मतान्तरेऽपि प्रधानस्य ब्रह्मण एव पुच्छत्वस्य स्वीकाराद् न शङ्कास्पदमपि, अन्यथा प्रतिष्ठात्वमानन्दमयं प्रति ब्रह्मणोऽनुपपन्नं स्यात्। अन्तरात्मत्वं तु पुच्छब्रह्मणो न पुच्छत्वप्रतिष्ठात्वाभ्यां गम्यत इति वदामः, किन्तु "तस्यैष एव शारीर आत्मा" इति तदनन्तरवाक्यान्तरेणैव। नहि पूर्वतनपर्यायेष्वपि सर्वान्तरत्वं तस्य तस्य तत्तत्पर्यायगतपुच्छत्व-प्रतिष्ठात्वाभ्यां ज्ञायते, किन्तु "तस्यैष एव शारीर आत्मा" इति तत्तत्पर्यायगतवाक्येनैव। यथाच "तस्यैष एव शारीर आत्मा" इतिवाक्यस्य पुच्छब्रह्मसर्वान्तरत्व एव तात्पर्यम्, अन्यथा तद्वाक्यवैयर्थ्योपातात्, तथा पूर्वमेवोपपादितम्। पर्यायसमाप्तिर्हि प्राणमयादिस्थले "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इति वाक्यपूर्वतनवाक्येनैव दृश्यते,

यतस्तेनैव प्राणमयाद्यतिरिक्त आत्मा प्रतिपाद्यते। सति चैवमानन्दमयपर्यायानन्तरेणापि तेन वाक्येनानन्दमयातिरिक्त एव कश्चन प्रतिपाद्यत इति वक्तव्यम्। तत्र पर्यायान्तरस्यादर्शनात् ज्ञायते आनन्दमयपर्यायगतवाक्यविशेषेण केनचन तदान्तरोऽपि प्रतिपाद्यते, इत्यगत्या पुच्छवाक्यस्यैव ब्रह्मशब्दघटितस्य मुख्यब्रह्मोपदेष्टृत्वमिति। पर्यायान्तरारम्भस्तु—तत्रापि शिरःपक्षाद्यवयवभेदविवक्षायां मुख्यब्रह्मनिरूपणासंभवात्, प्रायपाठात् तस्याप्यमुख्यत्वशङ्कापत्तेश्च न कृतकारी स्यात्, इति पुच्छवाक्येन तत्समर्प्यत इत्येव शोभते। प्रायपाठेन हि साम्यमेवापेक्ष्यते, न सर्वात्मना साम्यम्। इति नान्नमयादीनामिवानन्दमयस्याचेतनत्वस्यापादनसंभवः। सत्यं बहुप्रमाणविरोधे प्रायपाठो न किञ्चित्करः, बहुप्रमाणविरोधस्तु पुच्छवाक्याप्राधान्यपक्ष एव, नानन्दमयवाक्याप्राधान्यपक्षे।

एतेन—पर्यायान्तरारम्भं विना विवक्षितलाभायोग इति—परास्तम्, शैल्यन्तरेणोपदेशस्य भूमविद्यायामिवाविरोधात्।

इतश्चैतदभ्युपगन्तव्यम्—यत् पुच्छमेव ब्रह्मानन्दमयाख्यजीवान्तरम्—इति; यतः—"स यश्चायं पुरुषे। यश्चासावादित्ये" इति पुच्छब्रह्मणो जीवान्तरत्वं प्रतिपाद्यते। इयमत्राद्वैतिनां व्याख्या—"यो गुहायां विहितः परमे व्योम्न्याकाशादिकार्यं सृष्ट्वाऽन्नमयान्तम्, तदेवानुप्रविष्टः, सः य इति निर्दिश्यते। कोऽसावयं पुरुषे? यश्चासावादित्ये। यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टः, यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति, स 'यश्चासावादित्ये' इति निर्दिश्यते। स एकः; भिन्नदेशस्थघटाकाशैकत्ववदिति। अनया हि व्याख्यया गुहानिहितस्यैवादित्यान्तरेणात्मना साकमैक्यं प्रतिपाद्यते। गुहापदार्थश्चानन्दमयान्ताः कोशा एव, इति तदन्तरस्य परमात्मनः पुच्छब्रह्मण एव गुहानिहितपदेन पर-

मार्शः। अयं हि परमात्मा श्रोत्रियाणामेव परमानन्दरूपेण प्रत्यक्षः, नान्यः; आनन्दमयादीनां परमानन्दरूपत्वाभावात्। अत्र "ब्रह्मादीनि भूतानी'ति ब्रह्मणोऽपि कस्यचन जीवकोटौ निर्दिशन्तो हि व्याख्यातारः—"स एको ब्रह्मण आनन्दः" इत्यत्रत्यब्रह्मपदार्थमपि जीवमेव मन्यन्ते। व्यक्तश्चायमर्थो बृहदारण्यकचतुर्थाध्यायेऽपीति जिज्ञासाधिकरणसमालोचनावसर एव विशदीकृतम्। युक्तं चैतत्—"असन्नेव स भवती" त्यादीनां वाक्यशेषाणां पुच्छब्रह्मविषयत्वस्यैवाद्वैतिभिरङ्गीकारात्। एतेन—य एव विद्वातुर्निरतिशयानन्द उत्कृष्टोपाधौ प्रतिबिम्बतः, स एव निकृष्टोपाधौ शिरःपाण्यादिमति पुरुषे प्रतिबिम्बितः, इति परमानन्दमपेक्ष्य समत्वं विशिष्टयोः स्वभावैक्यं विवक्षितमिति टीकापि—व्याख्याता; अनया तु बिम्बानन्दः परमानन्दः पुच्छं ब्रह्मैव, आनन्दमयानन्दस्तु व्यष्टिरूपेणेव समष्टिरूपेणापि प्रतिबिम्बरूपत्वाद् न मुख्यं ब्रह्मेति पुच्छब्रह्मप्राधान्यवाद एवानुमन्यते।

एतेन—आविद्यकं भेदमादाय न तस्य जीवान्तरत्वमत्र व्याख्यायां टीकायां वोक्तम्। किञ्च तत्र ब्रह्मणो जीवान्तरत्वकथनेऽपि नाद्वैत्यभिमतसिद्धिः; अस्मद्रीत्यापि तदुपपत्तेः, नहि तत्रानन्दमयस्य पुच्छब्रह्मात्मभूतमिति विविच्योक्तमिति शङ्कापि—परास्ता; आनन्दमयपदपरित्यागेन परमानन्दपदस्य ब्रह्मण्यत्र प्रयोगेणानन्दमयातिरिक्तस्यैव प्रकरणार्थत्वविवेचनात्।

परमत्वं ह्यानन्दस्यापरिच्छिन्नत्वमेव। न हि ब्रह्मानन्दमयः, यः—स एको ब्रह्मण इति वाक्ये ब्रह्मपदार्थः, न सोऽपरिच्छिन्नानन्दः, शतगुणितप्रजात्यानन्दो हि सः कथं वाऽपरिच्छिन्नानन्दः स्यात्? तदिदं सिद्धम्—यत् पुच्छवाक्येनैव ब्रह्म समर्प्यते, नानन्दमयवाक्येन। तदुक्तं भामत्याम्—

ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मशब्दात्प्रतीयते ।
विशुद्धं ब्रह्म, विकृतं त्वानन्दमयशब्दतः ॥
प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्, उत्तरे पक्षे प्रायपाठस्य बाधनम्—इति ॥

यथाच—मयटो नानन्दमयशब्दे प्राचुर्यार्थकत्वसंभवः, संभवेऽपि वा न दुःखामिश्रानन्दवतोः विवक्षा, पुच्छशब्देन च न विकारतापादकावयवविवक्षा, तथा पूर्वमेव विवेचितम् ।

अत्र विशुद्धपदेनापरिच्छिन्नमकार्यरूपमित्येव विवक्षितम्, नतु कल्पितविशेषराहित्यमपि। तेन सर्वप्रपञ्चाधारत्वोपादानत्वादीनामपि कल्पितानामभावविवक्षां भामत्यभिमतां गृहीत्वा—पुच्छब्रह्मण आनन्दमयाधारत्वानुपपत्तिः, 'सोऽकामयत'इत्यादौ कर्तृत्वादिना तस्य निर्देशायोग इत्यादिदूषणानामभिधानं परपक्षनिराकृतिकाराणामनुक्तोपालम्भनमेव ।

एतेन—ब्रह्मपदं स्वार्थत्यागेनावयवपरं व्याख्यायताम् ? आनन्दमयपदं च ब्रह्मण्यप्रसिद्धं ब्रह्मणि व्याख्यायताम् ? उत्तरत्रानन्दशब्देनानन्दमयो लक्ष्यतामिति भामत्यपि—व्याख्याता; आनन्दमयब्रह्मतायां हि "ब्रह्म पुच्छं प्रतिष्ठे"तिवाक्ये यत् ब्रह्म पुच्छतया विवक्ष्यते, तद् निरतिशयबृहत्त्वविशिष्टं यदि मुख्यं ब्रह्म, तर्हि तस्यावयवत्वविरोधः, यदि तद् अवयवत्वायोग्यमन्यदेव ब्रह्म, तर्हि स्वार्थत्यागः। मुख्यमेव ब्रह्मपदार्थः, तस्यैवावयवत्वमिति तु व्याहतमिदम् । आनन्दमयस्यापि मुख्यत्वमवयविनः पुच्छब्रह्मणोऽवयवस्यापि मुख्यत्वमिति कथमिदं संभवति ?

एतेन—निरतिशयबृहत्त्वविशिष्टे ब्रह्मपदार्थे कल्पितावयवत्त्वस्यैव स्वीकारः, तत्कल्पने च स्वतःसिद्धस्वप्राधान्याविरोधित्वं चेति—परास्तम् ।

कल्पितत्वं हि यदि भ्रान्तिसिद्धत्वम्, तर्हि भवन्मते भ्रमस्यैवास्वीकारात् नोपपत्तिः, अन्यच्च तत् स्वप्राधान्याविरोधि किं वेति, नैतावताप्युक्तमिति नास्माकमपि किमपि वक्तव्यम्।

एतेन—आनन्दमयानन्दपदे अपि—व्याख्याते; आनन्दानन्दमयपदयोरुभयोरपि ब्रह्मणि मुख्यत्वं न संभवति; ब्रह्मण आनन्दमयत्वानन्दरूपत्वोभयासंभवात्। तत्राद्वैतिनो ब्रह्मण आनन्दरूपत्वं मन्यन्त इति आनन्दपदं ब्रह्मणि मुख्यं मन्यन्ते, आनन्दमयपदं तु तस्याबोधकमेवेति, तस्य जीवपरत्वमेव। श्रीभाष्यमते तु पदद्वयस्यापि ब्रह्मणि प्रयोगस्य स्वीकरणीयत्वात् आनन्दमयपदं ब्रह्मणि यदि मुख्यम्, आनन्दपदं तर्हि गौणं लाक्षणिकं वेति स्वीकर्तव्यम्। इदमेव खलु तेषामपि मतम्; तद्गुणसारत्वेनैवानन्दपदमानन्दमये प्रवर्तत इति तैरूरीकारात्। तथाच पदद्वयस्यापि मुख्यार्थत्वमद्वैतपदे, मतान्तरे तु एकं मुख्यार्थमपरं गौणार्थमिति। इदं तु न युक्तमिति भामत्याशयः।

एतेन—आनन्दमयपदस्य प्रकरणानुरोधेनानन्दप्रचुरब्रह्मपरत्वसंभवेन नाप्रसिद्धार्थकल्पना, आनन्दपदस्यापि तद्गुणसारत्वादिन्यायेन प्रकारान्तरेण च मुख्यवृत्त्या ब्रह्मपरत्वसंभवेन न लक्षणायाः प्रसक्तिरिति—परास्तम्।

नहि ब्रह्मप्रकरणमिति कृत्वाऽन्नमयादीनामपि ब्रह्मपरत्वेऽपि प्रसिद्धार्थत्वम्, इति तेषामिवानन्दमयस्यापि न ब्रह्मपरत्वम्; कुत्रापि तस्य ब्रह्मण्यप्रयोगात्; आनन्दपदं तु "यदेष आकाश आनन्दो न स्यात" इत्यादौ ब्रह्मणि प्रसिद्धम्। ब्रह्मप्रकरणं तु पुच्छब्रह्मप्राधान्येनापि लगतीति नानन्दमयस्यैव ब्रह्मत्व उपपद्यते, इति तद्गुणसारत्वादिना गौण्यैव वृत्त्याऽऽनन्दपदस्य ब्रह्मणि प्रसिद्धिः संपादनीयाऽऽनन्दमयब्रह्मतावादे। यत्तु—प्रकारान्तरेण

मुख्यवृत्त्या ब्रह्मपरत्वमुच्यते, तत्र किं तत् प्रकारान्तरमिति वक्तव्यम्, नतु तदुक्तम्। पुच्छपदविषये तु बहूक्तं पूर्वमेव। यद्यपि—पुच्छत्वेन ब्रह्मण उपासनाविवक्षणात् मतान्तरे पुच्छपदं मुख्यार्थम्; तथापि "ब्रह्मविदाप्नोति" इति प्रस्तुतं ब्रह्म न शिरःपक्षादिविशिष्टमिति न तादृशस्यानन्दमयस्य प्रक्रान्तब्रह्मपरत्वसंभवः, इति पुच्छत्वादित्यागेनैव केवलं ब्रह्मैवोपास्यतया ज्ञेयतया वा विवक्षणीयम्, इति पुच्छादिपदं कथं चनावयवादिपरतयैव नेयमिति युक्तमुक्तं भामत्याम्—पक्षद्वयेऽपि पुच्छपदं गौणमिति॥

यत्तु—लाङ्गले मुख्यं पुच्छपदं न करचरणाद्यवयवे। आनन्दमयस्यात्मनो न मुख्यलांगूलसंभव इति परिमल उक्तम्, तस्यायं भावः—पुच्छपदं न करचरणाद्यवयवमात्रपरम्, किन्तु लाङ्गूलवस्यैव बोधकम्। अत्र प्रथमांशोनुवादः, अंशान्तरे तु विधिः। तथाच पुच्छपदस्य मतान्तरे आधारपरत्वस्याप्यस्वीकारे वैतथ्यमेव स्यादिति। एतेन—पश्चाद्भागोऽपि नात्र पुच्छपदार्थ इति—व्याख्यातम्; पश्चाद्भागादिविशिष्टतया ब्रह्मणोऽप्रकृतत्वात्, आनन्दमयस्य परमात्मन एव स्वपश्चाद्भागत्वायोगाच्च। एतेन—अवयवप्रायपाठ-विकारप्रायपाठावपि—व्याख्यातौ; यतोऽन्नमय इत्यत्रेव प्रायपाठेन प्राणमयादिष्वपि विकारार्थकत्वमेव मयटो युक्तम्।

एतेन—प्राणमयादिष्वपि मयटः प्राचुर्यार्थकत्वमेवेति—प्रत्युक्तम्, प्रायपाठत्यागे कारणाभावात्।

यथाच मतान्तर एव प्रकरणबाधादयो बहवो दोषाः, तथा पूर्वमेवोक्ताः, वक्ष्यन्ते चोत्तरत्रेति निर्दुष्टोऽद्वैतिनामेव पक्ष उपादेयः यतः प्रतिष्ठात्वोक्तिसामर्थ्यात् आनन्दमयस्याप्यन्तरं ब्रह्मेति फलति। प्रतिष्ठात्वं हि तदधीनस्थितिकत्वं तत्प्रतीत्यधीनप्रतीतिविषयत्वं वा ब्रह्मण एवाधिष्ठानत्वात् मुख्यमुपपद्यते। "पृथिवी पुच्छं

प्रतिष्ठा" इत्यादौ न मुख्यं प्रतिष्ठात्वम्, किन्तूपासनार्थं कल्पितमिति न दोषः।

एतेन—"पृथिवी पुच्छं प्रतिष्ठा" "अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा" "महः पुच्छं प्रतिष्ठा" इति तस्य तस्य तं तं प्रति प्रतिष्ठात्वोक्तिमात्रेण तत्तदन्तरात्मत्वं न सिद्ध्यतीति तन्न्यायेनात्रापि न तत्सिद्धिरिति—परास्त।

तत्र हि प्राणमयाद्यन्तरात्मत्वमन्यस्य मनोमयादेः श्रौतमिति, नार्थापत्त्या लिङ्गेन पृथिव्यादीनामन्तरात्मत्वमवगम्यते, आनन्दमयपर्यायानन्तरं तु पुच्छब्रह्मातिरिक्तान्तरात्मानिरूपणात् वैषम्यमिति नार्थापत्तिप्रमाणभङ्गः। तथाच—आदित आरभ्य पुच्छत्व-प्रतिष्ठात्वयोरुल्लेखेन पुच्छस्यान्तरात्मत्वं प्रसक्तं बाधकान्तरसत्त्व एवान्यत्र प्राणमयादौ नाङ्गीक्रियते; अन्यथा—शिरः-पक्षादिस्थल इव इदं पुच्छमित्येव निर्देशस्यौचित्यात् सर्वत्र पुच्छपर्यायमात्रे प्रतिष्ठापदस्याधिकस्य निर्देशो वितथ एव समापद्येत। रज्जुसर्पादौ हि सर्पाद्यधारत्वात्, सर्पादिप्रतिष्ठात्वाच्च सर्पाद्यन्तरात्मत्वमेव रज्ज्वादेर्दृष्टम्, रज्जुस्वरूपव्यतिरेकेण सर्पस्वरूपाभावात्। समुद्रस्तु न नौकाप्रतिष्ठा, समुद्रादन्यत्रापि नौकायाः स्थितिसम्भवात्, इति न व्यभिचारः। एतेन—शरीरमपि—व्याख्यातम्। न हि शरीरमात्मनः प्रतिष्ठा; आत्मन एव शरीरप्रतिष्ठात्वात्।

एतेन—यत्र तदाधारत्वे सति तत्प्रतिष्ठात्वम्, तत्र तदन्तरात्मत्वमिति हि व्याप्तिराभिमता; सा च न संभवति। न हि नौकाप्रतिष्ठितिहेतोस्तदाधारस्य च समुद्रस्य तन्निरूपितान्तरात्मत्वमभ्युपगम्यते। न खलु जीवप्रतिष्ठितिहेतोस्तदाधारस्य च शरीरस्य तदन्तरात्मत्वमिति शङ्का—परास्ताम्।

यथाच सर्वान्तरत्वं पुच्छब्रह्मण एव; स्थूल-सूक्ष्म-कारण-शरीरावच्छिन्नस्य जीवस्य पुच्छब्रह्माधिष्ठानकत्वेनैव स्वरूपलाभात्

तथाऽन्यत्र व्यक्तम्। तत्र स्थूलशरीरान्नमयकोशावच्छिन्नो जग्रत् जीवः; प्राणमय-मनोमय-विज्ञानमयकोशात्मकसूक्ष्मशरीरावच्छिन्नः स्वप्नावस्थापन्नो जीवः, कारणशरीररूपानन्दमयकोशावच्छिन्नः सुषुप्त्यवस्थावान् जीवः, अवस्थात्रयातीतं तुरीयचैतन्यं पुच्छं ब्रह्मेति वेदान्तसारादौ व्यक्तम्। तथाच सर्वान्तरात्मत्वं पुच्छब्रह्मण एव, नतु जीवस्यैकावस्थावतोऽवस्थात्रयवतो वा व्यष्टिरूपस्य समष्टिरूपस्य वेति त्वंपदार्थशोधनेन तत्पदार्थशोधनेन वा तत्त्वमस्यादिमहावाक्यार्थ एवेतरनिषेधमुखेन तैत्तरीयश्रुत्यर्थः, इति जीव-ब्रह्माभेद एव शास्त्रार्थः; अन्यथा सत्यकामत्वाद्यनेककल्याणगुणविशिष्टस्यैव ब्रह्मत्वेऽन्नमयादिमुखेन तन्निरूपणं कथमपि नोपयुज्येत।

एतेन—जीव-ब्रह्मणोरभेदो बाधितः; "गुहाहितं गह्वरेष्ठं पुराणमि"त्यादौ ब्रह्मण एव हृदयदेशसन्निधानमात्रेण गुहाहितादिपदेन निर्देशात् इति न जीवब्रह्माभेदोऽत्र वाक्यार्थ इत्यादिकम्—अपस्तम्।

अन्नमयादिगुहानिहितत्वेन जीव-ब्रह्माभेदविवक्षाया एवात्र युक्तत्वात्; अन्यथाऽकस्मात् "यो वेद निहितं गुहायामि"ति पृथक् कर्मपदप्रयोगं विना जीवस्याप्यन्तरात्मतया तत्प्रतिपादनमनुपपन्नमेव। अप्राकृतदेशेऽवस्थितपरमात्मनो ज्ञानमेव यद्यत्र वाक्यार्थः, तर्हि अन्नमयादिरूपेण तदुपदेशः किंप्रयोजनः? सर्वथा तु आनन्दमयान्ताः कोशाः गुहाः, तदन्तरात्मा तस्याप्यधिष्ठानभूतं वा तुरीयमखण्डसच्चिदानन्दावाङ्मनसगोचरनिखिलाधारस्वरूपं तुरीयं चैतन्यमेव ज्ञेयं ब्रह्म। तच्च निर्विशेषत्वात् नानन्दमयपदेन बोध्यते, किन्तु "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्येनैव। "आनन्दमयोऽभ्यासादि" त्यादिसूत्राणामपि तत्रैव तात्पर्यम्।

तत्राद्वैत्यभिमतः प्रथमसूत्रार्थः—आनन्दमयपर्यायाम्नातं पुच्छं ब्रह्म, स्वप्राधान्येन प्रतिपाद्यम्; अभ्यासात् "असन्नेव स भव-

ती''त्यादि स्ववाक्यशेषस्थब्रह्मानन्दादिशब्दाभ्यासविषयत्वात्— इति।

अत्रेमे पर्यनुयोगाः परपक्षनिराकृतिकाराणाम्—"आनन्दमयपदस्य पुच्छवाक्यपर्यन्ततात्पर्यकत्वे किं मानम्? को वा प्रतीयमानार्थपरिग्रहे दुरुद्धरो विरोधः? (३) कथं च तादृशस्य साध्यस्याध्याहारः? (४) को वार्थ एवं व्याख्यानेन साध्यते? (५) सूत्रनिरपेक्षमानन्दमस्याब्रह्मत्वे पुच्छब्रह्मणश्च प्राधान्ये विवक्षिते प्रतिपन्ने किं सूत्रसाध्यमवशिष्यते? इति।

आनन्दमयब्रह्मतासाधकत्वाभावात् सौत्रस्य हेतोः—"आनन्दमयोऽभ्यासादि''तिसूत्रं पुच्छब्रह्मप्रमेयतामेव यतः सिद्धान्तविधया प्रतिपादयति, ततः पक्षसमर्पकमानन्दमयपदमगत्या पुच्छब्रह्मपर्यन्तमेव स्वीकर्तव्यम्, इति सौत्रहेत्वनुपपत्तिरेव तात्पर्यग्राहिका। प्राधान्येन प्रतिपाद्यत्वं नाम मुख्यतात्पर्यविषयत्वं मुख्यप्रमेयत्वं वा; तत्रैवाभ्यासस्य हेतुत्वात्, नतु ब्रह्मतामात्रम्। आकाशाधिकरणादिषु यत्राकाशादिपदानां ब्रह्मपरत्वं साध्यते, तत्र तल्लिङ्गादिकमेव हेतुतया निर्दिश्यते, ननु तात्पर्यग्राहकोऽभ्यासादिः, अतो नानन्दमयपदब्रह्मतासाधनपरमिदं सूत्रम्। प्रथमध्यायप्रथमपादे हि—ईक्षत्यधिकरणेन छान्दोग्यगतसद्विद्याप्रकरणस्य ब्रह्मपरत्वं प्रसाध्यते, आनन्दमयाधिकरणेन तु तैत्तरीयोपनिषदः केनांशेन ब्रह्मपरत्वमिति साध्यते। अन्तरधिकरणेन वाक्यविशेषगतमुपास्यं स्वशब्दतोऽनिर्दिष्टं तद्वाक्यगतलिङ्गविशेषैर्निधार्यते, आकाशाद्यधिकरणैस्तु ज्ञेयस्योपास्यस्य वाऽर्थान्तरे प्रसिद्धशब्दैर्निदिश्यमानस्यापि लिङ्गविशेषैः सन्दंशादिन्यायैश्च ब्रह्मत्वमेवेति व्यवस्थाप्यत इति हि वस्तुस्थितिः। तत्र यद्यानन्दमयपदमप्यर्थान्तरे प्रसिद्धं स्यात्, तर्हि तस्य ब्रह्मपरत्वव्यवस्थानार्थमिदमधिकरणमिति वक्तव्यम्। छन्दसि तु ब्र्यच एव विकारार्थे यदा मयट्, तदा तत्प्राचुर्यार्थकत्वव्यवस्थापन-

मपि मतान्तरे निष्प्रयोजनमेव। अद्वैतमतेतु—गुहास्वरूपम्, ज्ञेयनिर्विशेषता च सिद्धान्तफलम्, पूर्वपक्षफलंतु ज्ञेयसविशेषता विशेषतः।

इदं तु न विप्रतिपन्नम्—यद् आनन्दमयजीवत्वं तत्परमात्मत्वं चैव पूर्वोत्तरपक्षयोर्मतद्वयेऽपि विषय इति। तत्र यद्यानन्दमयो जीव इति पूर्वपक्षः, तर्हि केन वाक्येन ब्रह्म समर्प्यत इति वक्तव्यम्? नहि ब्रह्मैवात्र प्रकरणे न प्रतिपाद्यते इति वक्तुं शक्यते। तत्र यदि तत्पूर्वपक्षरीत्या—पुच्छब्रह्मवाक्यं ब्रह्मबोधकमिति मन्यते, तर्हि पूर्वपक्षिभिस्तद् ब्रह्म किंरूपमिति प्रमाणानुसारेण वक्तव्यम्; अन्यथा व्यर्थमेवाधिकरणमापद्येत। सति चैवम्—ब्रह्मनिर्विशेषता, तत्सविशेषता चोभयमपि मुख्यतात्पर्यविषयतयाऽवान्तरतात्पर्यविषयतया च प्रामाणिकमिति स्थिते एव कस्य ब्रह्मणोऽत्र विवक्षेति शङ्का संभवति। तत्रच सविशेषब्रह्मणोऽवान्तरतात्पर्यविषयस्य केवलमुपास्यस्य सत्त्वमसत्त्वम्, प्रमेयत्वं कल्पितत्वं वा न प्रयोजकम्, इति—"अभ्यासादि"ति हेतुं निर्दिशन्तः सूत्रकाराः ज्ञेयं ब्रह्मैवात्र प्रमेयं प्रतिपादयन्तीति प्रतीयते। इदंतु विचारं विना न सिद्ध्यतीति पुच्छवाक्यमेवात्र विचारयन्तीति विशदम्, यतो नानन्दमयपदमसन्दिग्धम्। सन्दिग्धार्थनिर्धारणार्थं खलु सूत्रम्, इति न प्रथमस्य पर्यनुयोगस्यावसरः।

एतेन—हेतुरत्राप्रयोजकः; पुच्छब्रह्मणोऽप्राधान्येऽपि वस्तुमत्प्राधान्यमादाय श्लोकस्थब्रह्मशब्दोपपत्तेः "तदप्येष श्लोकः" इत्यत्रत्यैषशब्देन प्रकृतस्यानन्दमयस्यैव परामर्शात्, अस्मद्रीत्या श्लोकस्थब्रह्मशब्दस्य पुच्छवदानन्दमयविषयकत्वेन स्वरूपासिद्धेरित्यादि—परास्तम्।

अनन्यपरपुनःश्रवणं ह्यभ्यासो नाम। सच पुच्छवाक्यस्थब्रह्मशब्दस्यैव श्लोके दृश्यते, नानन्दमयवाक्यगतानन्दमयपदस्य।

न ह्यभ्यस्यमानत्वमानन्दमयस्य। न ह्यानन्दमय-ब्रह्मशब्दौ पर्यायौ, येन ब्रह्मशब्दाभ्यासोऽप्यानन्दमयाभ्यास एव स्यात्। यथाच प्रकृतं ब्रह्म पुच्छमेव ब्रह्म, नानन्दमयः, तथा पूर्वमेवोक्तमिति नैषशब्देनानन्दमयपरामर्शः संभवति। यथाच श्लोकस्य नावयविविषयकत्वं नियतम्; मनोमयादौ व्यभिचारात्, तथा पूर्वमेवोक्तम्।

वस्तुतस्तु नैकोऽपि श्लोकः—अवयविविषयकः, अन्नमयादिश्लोकानामपि तत्कारणान्नादिविषयकत्वस्यैव दर्शनात्, किन्तु—अन्नमयादिकारणविषयक एव। एवं च—आनन्दमयपर्यायगतश्लोकस्याप्यानन्दमयकारणानन्दरूपपुच्छब्रह्मविषयकत्वमेव युक्तम्, इति आनन्दमयो ब्रह्म, निगमनश्लोकप्रतिपाद्यत्वादिति मतान्तरानुमान एव स्वरूपासिद्धिः, नाद्वैताभिमतानुमाने। तथाच कार्यमुखेन कारणज्ञापनमेवात्र प्रकरणार्थः। अत एव—"अन्नं ब्रह्मेति व्यजानात्" इत्यादौ कारणमुखेनैव ब्रह्मस्वरूपावधारणमुपपद्यते, इति कथं स्वरूपासिद्धिरद्वैतमते?

तथाच पूर्वसूत्रात् नञमनुकृष्य—आनन्दमययो न ब्रह्म अभ्यस्यमानब्रह्मशब्दाबोध्यत्वादिति सूत्रयोजनाया अप्यत्र विवक्षणात् मतान्तरापादिता स्वरूपासिद्धिः सूत्रयोजनयाऽपि वारयितुं शक्यते। इदमेवाभिप्रेत्योक्तं परिमले—"असिद्धिशङ्कायामपि सूत्रमेवोत्तरमि"ति।

एतेन—अत्रापि ब्रशब्दाभ्यासे सत्यानन्दमयस्य श्लोकप्रतिपाद्यत्वे को विरोधः? नहि पूर्वत्रैकेन पदेनोपात्तस्य परत्र तेनैव पदेनोपादानं कर्तव्यमिति नियम इति—परास्तम्; पूर्वोक्तरीत्याऽऽनन्दमयस्यावयविनः श्लोकप्रतिपाद्यत्वस्यैवायोगात्, अन्नमयादावपि तदभावात्।

एतेन—प्रतीयमानार्थपरिग्रहे को वा दुरुद्धरो दोष इति पर्यनुयोगोऽपि—व्याख्यातः; हेत्वन्वयायोग एव, इति पूर्वोक्तसा-

ध्योरीकारेणैव विवरणं योग्यम्, यतः "तत्तु समन्वयात्" इति व्यवस्थापितं शास्त्रयोनित्वमेवेक्षत्यधिकरणेन प्रधानाद् व्यावर्तितं बुद्धिस्थमिति तस्यैवानुषङ्गेणान्वयो युक्तः, इति नाद्वैतमतेऽध्याहारलेशोऽपि साध्यांशस्य। को वार्थोऽनेन व्याख्यानेन साध्यत. इति पर्यनुयोगस्तु—निर्विशेषतुरीयब्रह्मपारमार्थिकत्वेति दत्तोत्तरत्वाद् नावसरति।

नहि सूत्रनिरपेक्षमानन्दमयाब्रह्मत्वं वदामः, किन्तु—आनन्दमयब्रह्मतापूर्वपक्षनिरासार्थत्वमेव सूत्राणाम्, इति सूत्रसाध्यत्वादस्मदीयस्य सिद्धान्तस्य, किं सूत्रसाध्यमवशिष्यत इति पर्यनुयोगोऽपि निरवकाश एव। "विकारशब्दादिति चेत्, न प्राचुर्यात्" इत्यादिसूत्राणामपि प्रकृतसिद्धान्तानुगुणं योजनं तु भामत्यादितोऽनुसन्धेयम्।

अयमत्राद्वैताभिमत उक्तसूत्रार्थः—विकारशब्दात्—अवयववाचकपुच्छशब्दात् ब्रह्मणः स्वप्रधानत्वं नेति चेत्, न; प्राचुर्यात्=अवयवप्रायपाठमनुसृत्याप्यवयवशब्दोपपत्तेरवयवाविवक्षणादिति। अत्र विकारशब्देन कार्यं विवक्ष्यते, पुच्छमपि अवयवविशेषः कार्यमिति कृत्वाऽवयववाचिना पुच्छशब्देन कार्यमेव ब्रह्म विवक्षितं भवति, न शास्त्रतात्पर्यविषयो ब्रह्म पुच्छवाक्यार्थ इति शङ्काहृदयम्। प्राचुर्यात्—इत्यनेनतु प्रायपाठादिति विवक्षितम्, पुच्छशब्दः पूर्वतनेषु सर्वेषु पर्यायेषु वर्तते, इति प्रकृतेऽपि तत्प्रयोगः, नावयवविवक्षयेति विवक्ष्यते। अनेन चावयववाचित्वाभावे प्रतिपादिते "विकारशब्दादि"त्यंशोपक्षिप्तसत्प्रतिपक्षनिरासो भवति। तथाच सत्प्रतिक्षानुमानेऽप्रयोजकत्वशङ्कानिरूपणपरं प्राचुर्यादिति सौत्रं पदम्, यतः पुच्छपदमात्रं न मुख्यब्रह्मताविरोधि भवति, किन्त्ववयववाचकपुच्छशब्दवत्त्वमेव। नचात्र तद् वर्तते.;

अभ्यासादिना प्राधान्येऽवगते तस्याधारतामात्रतात्पर्यकत्वस्वीकारात्। पुच्छशब्दः प्रायपाठात्, इत्युक्ते नावयवविवक्षयेति फलतीति कृत्वा सत्प्रतिपक्षानुमाने स्वरूपासिद्धिरपि सूच्यत इति मन्तव्यम्। तथाच प्राचुर्यस्यैव प्रकृताक्षेपपरिहारार्थत्वस्वारस्यमपि सिद्धम्।

एतेन—पर्यायान्तरानुसारिपुच्छपदनिर्देशस्य ताद्दशार्थविवक्षायामेव हेतुत्वात् सौत्रो हेतुरनन्वित इति—परास्तम्।

नहि पर्यायान्तरेषु पृथिव्यादीनां प्राणमयाद्यवयवत्वमिव कल्पितमप्यवयवत्वमानन्दमयब्रह्मतावादिमतेऽपि संभवति, इति अवयववाचकत्वाभाव उभयसम्मत इति वक्तव्यम्, इति, विकारशब्दसाम्यमेवात्र विवक्ष्यते, नतु विकारशब्दत्वमिति फलति, इति स्वरूपासिद्धिसाधकत्वात् कथं सौत्रो हेतुरनन्वितः। पुच्छशब्दनिर्देशमात्र एव पर्यायान्तरानुसरणम्, न तदीयार्थविवक्षायामपीति तु निष्कर्षः।

इदमेवाभिप्रेत्योक्तं परिमलादौ—पुच्छपदं न ब्रह्मप्राधान्यविरोधि; आधारलक्षकत्वादिति। नहि पूर्वतनवाक्यगतस्य यत्पदस्य यदर्थपरत्वम्, तदनुसारिवाक्यान्तरगतस्यापि तस्य पदस्य स एवार्थः स्वीकर्तव्य इति नियमः; अन्यथा—"यजमानः प्रस्तरः" इत्यत्रेव—"यजमानादयजमानमुत्तरं करोति। तस्माद् यजमानोऽयजमानादुत्तरः" इति तदनुसारिवाक्यान्तरगतयजमानपदस्यापि तत्सिद्ध्या गौणार्थकत्वं कोऽपि मन्येत, इति एकत्र प्रयुक्तस्य शब्दस्य पुनरपि प्रयुज्यमानेन तेनैव शब्देन समानार्थत्वं न स्वीकरणीयम्।

इयान् विशेषः—यत् 'यजमानः प्रस्तरः' इत्यत्र प्रथमस्य गौणार्थत्वम्, परस्य मुख्यार्थत्वम्, अत्र तु पूर्वेषां मुख्यार्थत्वम्, उत्तरस्य गौणार्थत्वमिति; पुच्छवत् पुच्छमिति विवक्षणात्।

अत एव—"असौ वाव लोको गौतमाग्निरि" त्यत्र पर्यायपञ्चके षष्ठपर्याये चाग्न्यादिशब्दानां सांपादिक-मुख्याग्निविषयकत्वेन

भेदेऽप्यग्न्यादिशब्दानां मुख्याग्निपरत्वावगतिः । तत्र यथा षष्ठपर्याये सांपादिकाग्निपरत्वं बाधितम्, एवमेवात्रापि पुच्छपदस्य ब्रह्मपद समानाधिकरणस्यावयवपरत्वं बाधितम्, इति न विषमो दृष्टान्तः। इयान् विशेषः—यत् दृष्टान्तेऽग्न्यादिपदार्थाः सांपादिका ; मुख्याश्च, प्रकृते तु पुच्छपदार्थो मुख्यो गौणो लक्ष्यो वेति, इदं त्वविशिष्टम्—पर्यायान्तरानुसारिपुच्छपदस्य पर्यायान्तरगतपुच्छपदस्य चैकार्थकत्वं तु न स्वीक्रियते इति। सर्वथातु तत्र सर्वेषु पर्यायेषु नैकरूपार्थत्वं स्वीक्रियते। नहि वयमपि प्रकृतेऽपि पुच्छपदस्यार्थ एव नास्तीति वदामः।

एतेन—तत्र सर्वेषु अग्न्यादिशब्दार्थस्तावदविशिष्टः, तस्य सांपादिकत्व-तदभावौ च समभिव्याहारबलायत्तौ, इति तत्र शब्दार्थवैषम्याभावात् इह वैषम्यकथनाच्च नायं दृष्टान्त इत्यादि—परास्तम् ; सर्वेषां पर्यायाणामनैकरूप्यमात्रे दृष्टान्तताश्रयणात्। गौणवृत्तिस्थले सर्वत्रारोपितत्वसम्बन्धेन शक्यार्थगुणवत्त्वेव पदार्थ इति सिद्धान्तरीत्या पुच्छपदेनाप्याधारत्वमात्राविविक्षायां दोषाभावाच्च। तथाच ब्रह्मणोऽवयवतयाऽपि "ब्रह्म पुच्छमि"तिवाक्ये विवक्षाभावात् नावयववाचकत्वं पुच्छशब्दस्य 'ब्रह्म पुच्छं प्रतिष्ठे'ति वाक्येऽपि सूत्रकाराभिमतम्।

स्पष्टं हि सूत्रकाराः—"आध्यानाय प्रयोजनाभावात्" इत्येतद्गुणसूत्रेण—"आत्मशब्दाच्च" इतिसूत्रेणात्मनो निरवयवत्वेन मतान्तरेऽपि शिरःपक्षादिमत्त्वाभावमनुमन्यन्ते, तद्धेतुत्वविवक्षया। अत्रेदं श्रीभाष्यम्—"अन्योऽन्तर आत्माऽनन्दमयः" इत्यात्मशब्दनिर्देशात् आत्मनः शिरःपक्षपुच्छासंभवात् प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमि"ति। अत्रेयं श्रुतप्रकाशिका—शास्त्रेण प्रतिपत्तौ बुद्धावारोहणाय प्रियशिरस्त्वादि प्रतिपत्तव्यम्, एवमपरिच्छिन्नानन्दे प्रतिपन्ने सत्युपास्तौ प्रियशिरस्त्वा-

दिकं नानुसन्धेयमित्यर्थ इति । स्पष्टं च—"प्रिनशिरस्त्वाद्यप्राप्तिरूपचयापचयौ हि भेदे" इति सूत्रभाष्ये श्रीभाष्यकारा अपि शिरःपक्षाद्यवयवशून्यत्वं ब्रह्मणः प्रतिपादयन्ति ।

एतेन—पुच्छपदस्यावयवविशेषपरत्वाभावे—"आध्यानाय प्रयोजनाभावात्" इति सूत्रेणानन्दमयं ब्रह्म ध्यानरूपवेदनसिद्धये प्रियमोदादिशिरःपक्षपुच्छादिमत्त्वेनोपदिश्यते इत्यर्थकेनात्रत्यपुच्छपदस्याप्यवयवपरताया अवगमितत्वेन तद्विरोधो दुर्वारः ।नहि दृष्टान्तसद्भावमात्रेण सूत्रकाराशयविरोधोऽपि श्लाघ्य इत्यादि—परास्तम् ।

न ह्यत्र सूत्रे ध्येयकोटौ प्रियशिरस्त्वादिकमपि ग्राह्यमिति बोध्यते, किन्तु केनचन कल्पितेन रूपेण बुद्धावारोपणमेव । सति चैवम्—शिरःपक्षाद्यवयवकत्वं ब्रह्मणो ध्येयस्य न विवक्षितमित्येव फलति । तथाच ध्येयब्रह्मस्वरूपनिरूपणपरस्सर्वोऽप्यानन्दमयपर्याय इति न श्रीभाष्यकाराणामपि मतम् , किन्तु—आनन्दमयवाक्यमेव तन्निरूपणपरमित्येव । तत्रच "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यस्य न मुख्यब्रह्मप्रतिपत्तावुपयोग इति तन्मतम् , अस्मन्मते तु तस्यैव परमं प्रामाण्यमिति । तत्र श्रीभाष्यमते—सर्वशरीरकस्य परमात्मनस्तस्मादन्य इति पृथग् उपदेशो नोपपद्यते, इति—"तस्माद्वा एतस्मादन्योऽन्तर आत्माऽऽनन्दमयः"इति न परमात्मोपदेशपरं भवितुमर्हति, अद्वैतमतेतु "ब्रह्म पुच्छमि"ति वाक्यं सर्वाधिष्ठानतुरीयचैतन्यनिरूपणपरं भवितुमर्हति । मतद्वयेऽपि प्रियशिरस्त्वादिविशिष्ट आनन्दमयो न परमात्मेति सम्मतम् । इदमपि संप्रतिपन्नम्—यदानन्दमयपर्यायेणैव परमात्मोपदेशः पर्यवसन्न इति । इदमेव तु विवादास्पदम्—यदानन्दमयपदं ज्ञेयब्रह्मपरम् , उत तत्पर्यायगतपुच्छब्रह्मपदं तत्परमिति । तत्रानन्दमयस्य प्रियादिशिरस्कस्य न परमात्मत्वमित्युभयसंप्रतिपन्नम् । पुच्छंतु ब्रह्म किमानन्दमयावयवतया विव-

क्षितम्, उत न। आद्ये—"आत्मशब्दाच्चे"ति पूर्वोक्तसूत्रभाष्यादिविरोधः। अन्त्येतु तस्यैव प्रक्रान्तब्रह्मसमर्पकत्वमित्यङ्गीकार एवार्थप्राप्त इति कथमानन्दमयब्रह्मतायां सूत्रस्य तात्पर्यम्?

इदमभ्युपगम्याध्यानायाधिकरणस्य पूर्वोक्तं विवरणमुपपादितम्। वस्तुतस्तु—"प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति सूत्रेणैव प्रियशिरस्त्वादीनां ब्रह्मधर्मत्वाभावस्य प्रतिपादनात् तद्धर्माणामाध्यानप्रसङ्गस्यैवाभावात् व्यर्थमिदमधिकरणमापद्येत—यदि श्रीभाष्यकाराद्दृतमेव विवरणं सूत्रकाराणां विवक्षितं स्यात्। "आत्मशब्दाच्चे"ति आत्मशब्दः प्रियादिशिरस्कत्वाभावे कारणं यन्मन्यते, तदपि अन्नमय-प्राणमयादावप्यात्मशब्दात् नोचितं प्रतीयते।

ततश्च—"अकृतकरत्वप्रसङ्गात्, सूत्राक्षराननुगुणत्वात्, विचारणीयवाक्याविचाराच्च न श्रीभाष्याद्युत्प्रेक्षितार्थकत्वमस्याधिकरणस्य योग्यम्, किन्तु अर्थान्तरविचार एवात्र योग्यः। सतु—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः"इत्यत्र किं प्रत्येकमर्थादीनां परत्वं चिन्तनीयम्, उतात्ममात्रे सर्वतः परत्वमिति। यद्यपि कठवल्ल्याः परमात्मपरत्वं बहुशः सूत्रकारैरालोचितम्, निर्णीतं च; तथापि प्रत्येकं परत्वाध्यानमपि आत्मपरत्वाध्यानाङ्गतया कर्तव्यमिति शङ्का तु परिहरणीयैव, इति नायं विचारः कृतकरः। दृश्यन्ते हि बहून्येवाधिकरणानि कठवल्लीगतवाक्यार्थनिर्णयार्थानि; अन्यथा हि—प्राणमयादिषु प्रत्येकमन्तरात्मानुसन्धानमिव प्रत्येकमर्थादिष्वपि परत्वानुसन्धानमावश्यकमित्यापद्येत। एतेन—गन्धर्वाद्यानन्दानां पूर्वपूर्वानन्दशतगुणितत्वाध्यानमपि—व्याख्यातम्; तत्रापि तदनुसन्धानं विनोत्तरोत्तरानन्दस्वरूपज्ञानासंभवेन पूर्वपूर्वाधिकत्वाध्यानं ह्यत्यन्तमेवापेक्षितम्।

एतेन—उक्ततैत्तरीयवाक्यपरित्यागेन कठवल्लीविषयवाक्यग्रहणेऽपि कारणं सूचितम्—भवति। वस्तुतस्तु—इन्द्रियपरार्थपरमनःपरबुद्धिपरत्वेनात्मोपदेश इव ब्रह्मानन्दो नान्यानन्दापेक्षयाऽधिकतयाऽत्र निर्दिश्यते; "यतो वाचो निवर्तन्ते" इत्यवाङ्मनसगोचरत्वेनैव ब्रह्मानन्दोपदेशात्, इति नैतद्विषयवाक्यसाम्यं प्राणमयादीनां गन्धर्वाद्यानन्दानां च भवितुमर्हति।

वस्तुतस्तु—पुरुषविधत्वरूपणार्थमेव ह्यत्र शिरःपक्षाद्यवयवकीर्तनमिति हि "प्रियशिरस्त्वाद्यप्राप्ति" रित्यत्रत्यं श्रीभाष्यम्। परमात्मा तु पुरुष एव; "सहस्रशीर्षा पुरुषः" इत्यादिश्रुतेः, नतु पुरुषविधः; पुरुषविधस्तु—प्रथमजीवहिरण्यगर्भपर्यन्तो जीवराशिरेव। अत एव "स एको ब्रह्मण आनन्दः" इति हिरण्यगर्भानन्दपर्यन्तमेव परिच्छेदेन शतगुणितत्वेन स्वसमानाधिकदुःखाल्पनिरूपकस्य प्राचुर्यस्य विवरणं दृश्यते। शङ्करभगवत्पादा अपि—आत्मगृहीत्यधिकरणे यत्र पुरुषविधत्वविशेषणम्, तत्र हिरण्यगर्भादेर्ग्रहणं भवतु, "आत्मा वा इदमग्र आसीत्" इत्यत्र तूक्तविशेषणाभावात् परमात्मैव गृह्यत इति वदन्तोऽमुमर्थमुपष्टम्भयन्तीति व्यष्टिरूपेण समष्टिरूपेण च जीवस्वरूपनिरूपणार्थमेवानन्दमयान्ताः पर्यायाः, न परमात्मस्वरूपनिरूपणार्थमिति जानीमः, इति परमात्मावयवतया पुच्छशब्दप्रवृत्तिरिति न कथमप्युपपद्यते।

तदत्र प्रकरणशुद्ध्यर्थम्—"प्रियशिरस्त्वाद्यप्राप्तिः" रित्यारभ्य—"अन्वयादिति चेत् स्यादवधारणात्" इत्येतदन्तसूत्राणां मतद्वयभाष्यार्थसमालोचनमत्यन्तमावश्यकम्, इति किञ्चिदिव तत्र लेखनीं व्यापारयामः।

"आनन्दादयः प्रधानस्ये"ति निर्विशेषस्य ब्रह्मणः स्वशाखागतैरिव शाखान्तरगतैरपि धर्मैः प्रमितिसिद्धिरिति निरूप-

णार्थमधिकरणमित्यद्वैतमतम्, एतन्मते—"प्रियशिरस्त्वाद्यप्राप्तिरि" त्यादिकं प्रियशिरस्त्वादीनामपि पुच्छब्रह्मप्रतिपत्तावुपयोगेऽप्यानन्दादिवद् ब्रह्मस्वरूपत्वाभावाद् न ब्रह्मप्रमितावुपयुज्यते, इति तस्यैवाधिकरणस्य गुणसूत्रम्—"प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति। तत्र को वा विशेषः—प्रियशिरस्त्वादिभ्य आनन्दादीनामिति शङ्कानिराकरणार्थमपरं गुणसूत्रम्—"इतरे त्वर्थसामान्यात्" इति। सत्यज्ञानानन्तानन्दानां सर्वासु शाखासूपसंहारः कर्तव्य इति तु तात्पर्यम्। तथाच ब्रह्मस्वरूपलक्षणानि सर्वाणि सर्वत्रानुसन्धेयानि, अन्येतु—अध्यारोपविधया प्रवृत्तधर्मा नोपसंहर्तव्या इति फलति। यद्यपि "सर्वाभेदात्" इत्यनेनैव न्यायेनेदमपि सिद्ध्यति; तथापि प्राणस्य सविशेषत्वात सविशेषविषय एवोपसंहारः, न निर्विशेषविषय इति शङ्कावारणार्थम्, निर्विशेषेऽपि स्वरूपलक्षणानामेवोपसंहारो नान्येषामिति निरूपणार्थं चेदमधिकरणमावश्यकम्।

श्रीभाष्यमते तु—अब्रह्मधर्माणामुपसंहारं प्रतिपाद्य ब्रह्मधर्माणामप्यानन्दत्वादीनां स्वरूपप्रतिपत्त्यनुबन्धिनामुपसंहारव्यवस्थापनार्थम्—"आनन्दादयः प्रधानस्ये"ति सूत्रं पृथगधिकरणम्। "प्रियशिरस्त्वाद्यप्राप्तिरि" सूत्रम्—"इतरे त्वर्थसामान्या"ति सूत्रं चाधिकरणान्तरम्।

इदमेवात्रालोचनीयम्—यदि प्रधानस्य ब्रह्मणोऽभेदेन तत्स्वरूपप्रतीत्यनुबन्धिनां गुणानामुपसंहारः, तर्हि आनन्दमयब्रह्मतावादे तत्रापि प्रधानस्यानन्दमयस्य ब्रह्मणः सर्वत्राभेदात् कथं नोपसंहारः? अङ्गीकृतं हि श्रीभाष्यानुयायिभिरपि—"शास्त्रेण प्रतिपत्तौ बुद्ध्यारोहणाय प्रियशिरस्त्वादि प्रतिपत्तव्यमि"ति—"आध्यानायाधिकरणप्रघट्टके वदद्भिर्ब्रह्मस्वरूपप्रतिपत्तौ प्रियशिरस्त्वादी-

नामप्युपयोगः, इति को वा विशेषः सत्यकामत्वानन्दत्वादिधर्मेभ्यः प्रियशिरस्त्वादेः ? अद्वैतमते तु—आनन्दादिकं स्वरूपम् , प्रियशिरस्त्वादिकं तु न स्वरूपमिति विशेषः सर्वविदित एव। सर्वथातु—आनन्दादीनां प्रियशिरस्त्वादीनां च विशेषप्रतिपादनार्थत्वात् त्रयाणां सूत्राणामेकाधिकरणत्वमेव समुचितम्। सति चैवम्—"इतरे" इति स्वविषयैकदेशस्यैव ग्रहणं सुष्ठु संगच्छते।

एतेन—"कामादीतरत्र तत्र चायतनादिभ्यः" इत्यधिरणसार्थक्यमपि—व्याख्यातम् ; यतो विद्याविशेषत्व एव सत्यकामत्वादीनामुपसंहाररूपता निधार्यते, श्रीभाष्यमते तु—आनन्दत्वादीनामिव सत्यकामत्वादीनामपि "—आनन्दादयः प्रधानस्ये" ति सूत्रेणैवोपसंहारस्य साधितत्वाद् व्यर्थं तदधिकरणम्।

यत्तु—"आध्यानाय प्रयोजनाभावात्" इति सूत्रम् , तदिदम्—उपासनाय सम्यग् दर्शनाय वा प्रयोजनाभावात् कस्य चनानुपसंहारं बोधयतीति मतद्वयसंप्रतिपन्नम्। तत्र प्रकृत एवानन्दमयवाक्ये प्रकृतप्रियशिरस्त्वादीनामेवाप्राप्तिरूपानुसंहारपरमिति श्रीभाष्यमतम्, अद्वैतमते—"इन्द्रियेभ्यः परा ह्यर्था" इति वाक्यान्तरमधिकृत्यात्मप्रतिपत्तौ परम्परयोपयुक्तानामर्थादिपरत्वानामपि ब्रह्मसम्यगदर्शने नोपयोग इत्यनुपसंहारनिरूपणपरमिति। वक्तव्यं चात्र सर्वं पूर्वमेव वर्णितम्।

"आत्मशब्दाच्चे"ति सूत्रं तु श्रीभाष्यमते सर्वथा विरुद्धम् ; यतो निरवयवत्वहेतुः खल्वात्मशब्देन विवक्ष्यतेः, अयं च विरुद्धो हेतुः, परमात्मनो निरवयवतायास्तैरनङ्गीकारात्। विभागासहत्वरूपमेव खलु श्रीभाष्यमते निरवयवत्वम् , न त्ववयवशून्यत्वम्। अतोऽवश्यमिदं सूत्रमद्वैतप्रक्रियामनुसृत्यैव विचारणीयम् , नतु स्वमत प्रक्रियाम्। "आत्मनो निरवयवत्वप्रसिद्धिमुपजीव्य प्रवृ-

त्तमिदं सूत्रम्'' इति वदन्तः श्रुतप्रकाशिकाकारा अपीदमेव सूचयन्ति। अद्वैतिनां विवरणं तु पुरुष आत्मशब्दात् तस्य सम्यग् दर्शनाय प्रयत्नः कर्तव्यः, नान्येषामर्थादीनाम्; तेषामनात्मत्वात्, यतः सुज्ञाना अनात्मानः, आत्मैव तु दुर्ज्ञानः। अत्रात्मशब्दादित्यनेन आत्मशब्दघटितवाक्यस्य ग्रहणात् तस्य च "एष सर्वेषु भूतेषु गूढो त्मा न प्रकाशते'' इत्याकारस्योक्तार्थपरत्वात् न दोषलेशोऽपि। मतान्तरे तु—'अन्योऽन्तर आत्माऽनन्दमयः' इत्यात्मशब्देन निर्दिष्टस्यैव प्रियादिशिरस्कत्वस्यापि निर्देशात्, प्राणमयादिपर्यायेषु तदपरित्यागाच्च कथमात्मशब्दो निरवयवतायां प्रमाणं स्यात्? तथाच नानन्दमयनिरवयवतादिव्यवस्थापनार्थमिदमधिकरणम्।

इदमत्रालोचनीयम्—यत प्रियशिरस्त्वादिकं यथा न विवक्षितम्, एवमात्मत्वमपि मतान्तरे न विवक्षितं वा, उत विवक्षितमिति। तत्र प्राणमयादावात्मत्वस्याविवक्षणे ततोऽन्यस्योपदेश एव कारणमिति वक्तव्यम्, न तु प्रकृते तादृश उपदेशो वर्तत इति विवक्षितमात्मत्वमिति कृत्वैवात्मशब्दादिति हेतुनिर्देश इति वक्तव्यम्। अत एव—"प्रियशिरस्त्वाद्यप्राप्तिरि''त्येव सूत्रम्, नात्मत्वादीति। वयं तु मन्यामहे—ततोऽन्यस्याप्यन्तरात्मनः "तस्यैष एव शारीर आत्मा'' इत्युपदेशात् तस्यापि प्राणमयादेरिव गौणमेवात्मत्वमिति। तथाच प्राणमयादिसाधारणोऽयमात्मशब्दः कथमानन्दमयमात्रनिरवयवतायां हेतुः स्यात्? तथाच—"आत्मशब्दादि'' ति सूत्रं कथमपि न मतान्तरानुगुणम्; अन्यथा मतान्तराभिमतस्यैव विवरणस्यादरणे—"आत्मशब्दाच्च'' इत्यनेनैव गतार्थत्वात् व्यर्थम्—आत्मगृहीतिरितरवदुत्तरादि''ति सूत्रादिकमधिकरणं तन्मतरीत्या।

मतान्तरे हि—इदमधिकरणमपि—आनन्दमयपर्यायगतात्मशब्दस्यैव परमात्मपरत्वव्यवस्थापनार्थमिति मन्यते। अत्रेदमालोचनीयम्—यत् पूर्वमात्मशब्दस्य प्राणमयादिपर्यायगतात्मशब्देनैकार्थ्यं विवक्षितम्, उत भिन्नार्थत्वम्, आद्ये विरोधः; अन्त्य उक्ताधिकरणवैयर्थ्यम्। किञ्चात्र सूत्रे इतरवदिति किं विवक्ष्यते—"यद्यात्मा वा इदमेक आसीदिति वाक्यम्, तर्हि तत्रत्यात्मशब्दस्य परमात्मपरत्वं कथं निर्धार्यते। तदपीदानीमेव हि निर्धारणीयमिति मन्वाना ह्यद्वैतिनस्तस्यैव विषयवाक्यत्वं मन्यन्ते। अत्र मते "इतरवत्" इति "आत्मन आकाशः संभूतः" इति वाक्यगतात्मशब्दो विवक्ष्यते। नचायमनिर्णीतार्थः; 'तस्माद्वा एतस्मादि" ति तदेतच्छब्दाभ्यां गुहानिहितब्रह्मपरामर्शात्। तथाच मतान्तरेऽपि तस्यैवात्मशब्दस्यानन्दमये समापनं यदि विवक्ष्यते, तर्हि कथं संशयावसरः? अतो ज्ञायते—आनन्दमयनिरवयवत्वादो न किमपि प्रमाणम्, इति नानन्दमयब्रह्मतावादो युक्तः, इति "विकारशब्दादिति चेन्न प्राचुर्यादि"ति सूत्रं पुच्छब्रह्मणो निरवयवस्य प्राधान्येन प्रतिपाद्यत्वमेव व्यवस्थापयतीति सांप्रदायिकः पन्थाः।

अयं भावः—"ब्रह्मविदाप्नोतीति" प्रस्तुतस्य ब्रह्मणो सत्यज्ञानादिरूपत्वेन व्यवस्थापनात् ब्रह्म किमिति न शङ्कास्ति, किन्तु—अन्नमय-प्राणमययादीनां तत्त्वे उपदिष्टेऽन्यस्यान्यस्य चोपदेशप्रक्रमाच्च पर्यवसितं ब्रह्म किमित्येव शङ्का वर्तत इति प्राधान्येन प्रतिपाद्यत्वमेव साधनीयम्, इति तदेवानेनाधिकरणेन साध्यते।

तच्च प्रधानं ब्रह्म—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति कारणतया निर्दिष्टमेवेति, उपर्यपि कारणतया यन्निर्दिष्टम, तदेव मुख्यं ब्रह्मेति वक्तव्यम्। आनन्दमयस्तु न सर्वकारणतयात्र प्रतिपाद्यते, तस्यापि कार्यकोटौ प्रवेशेन सर्वकारणत्वायो-

गात्। अतः सानन्दमयविकारजातकारणतया निर्देशादपि पुच्छं ब्रह्मैव प्रकरणार्थं इति निरूपणार्थं तृतीयं सूत्रम्—"तद्धेतुव्यपदेशाच्चे"ति। सानन्दमयविकारजातं प्रति कारणत्वेन व्यपदेशात् पुच्छं ब्रह्मैव प्रधानमिति भगवत्पादाभिप्रेतः सूत्रार्थः। यथाच—नानन्दमयब्रह्मत्वनिश्चयः, तत्कारणत्वस्य पुच्छब्रह्मणि संभवः, मतान्तरे आकारान्तरविशिष्टस्य ब्रह्मणो वस्तुगत्या निरवयवत्वमेव तदीयभाष्यकारादिभिर्मन्यते, इति आनन्दमयजीवतापक्षस्यैव सम्यक् व्यवस्था, "सोऽकामयते" त्यादौ पुच्छब्रह्मण एव कारणत्वेन परिग्रहश्च, तथा पूर्वमेवोपपादितम्।

एतेन—यथा आनन्दमयस्य जीवत्वं सिद्धवत्कृत्य सानन्दमयविकारहेतुव्यपदेशात् पुच्छं ब्रह्म प्रधानमित्युच्यते, तथा पुच्छब्रह्मण एवानन्दमयावयवत्वादिनाऽऽनन्दमयपरमात्मत्वं सिद्धवत्कृत्य सपुच्छब्रह्मसर्वविकारहेतुव्यपदेशात् आनन्दमय एव प्रधानभूत इत्येवार्थः कुतो न भविष्यति ? इति—परास्तम्।

पुच्छमपि ब्रह्म कार्यकोटिप्रविष्टमिति कस्येदं मतम्? यदि श्रीभाष्यकारणाम्, तर्हि आनन्दमयानतिरिक्तस्यैव ब्रह्मणः पुच्छत्वमिति तदीयसिद्धान्ते तस्य कार्यत्वासंभवः, मतान्तरं तु तादृशं न प्रसिद्धमिति न केवलं परदृष्ट्या, किन्तु स्वदृष्ट्यापि हि स्वरूपासिद्धिः। यथाच पुच्छपदस्यापि मुख्यार्थपरित्यागो मतान्तरे, तथा पूर्वमेव तदीयग्रन्थदृष्टयैव प्रदर्शितम्। "पुच्छत्वकल्पना न कारणत्वश्रुतिमुपरोद्धुमलमि" त्यत्रैव प्रकरणे भवन्तोऽपि हि वदन्ति, इति तस्य मुख्यार्थापरित्यागो न तन्मते गुणो वर्तते। तदुक्तं परिमले—ब्रह्मणि पुच्छत्वकल्पने तस्यानन्दमयमुख्यावयवत्वमेवाङ्गीकार्यम्, प्रकरणे मुख्यावयवेष्वेव शिरस्त्वादिकल्पनादर्शनात्—इति। यत्तु—अद्वैतिनो जीवं प्रति पुच्छत्वं ब्रह्मणो मन्यन्ते, तदिदं नावयवतया, किन्त्वधिष्ठानतया।

एतेन—जीवं प्रत्यवयवत्वेऽपि वस्तुविरोधाभावं वदतस्ते स्वं प्रति तत्त्वे कः प्रद्वेष इति—प्रत्युक्तम्; अनुक्तोपालम्भनत्वात्।

तदेवं सानन्दमयविकारहेतुव्यपदेशेन पुच्छं ब्रह्मैव प्रधानमिति व्यवस्थापितम्, यतः—"सत्यं ज्ञानमनन्तं ब्रह्मे" ति प्रकृतं ब्रह्मपदमेव पुच्छवाक्य उपसंह्रियते। तदेव च—"असन्नेव स भवती" त्युपरितनप्रकरणेष्वनुकृष्यते, नानन्दमय इति निरूपणार्थं तुरीयं सूत्रम्—"मान्त्रवर्णिकमेव च गीयते" इति। अयमस्यार्थः—यत् सत्यं ज्ञानमिति मन्त्रोक्तं ब्रह्म, तदेव ब्रह्म पुच्छं प्रतिष्ठेति ब्राह्मणेन प्राधान्येन गीयते, पुच्छपदस्यावयवपरत्वे तु मन्त्रे प्राधान्यम्, ब्राह्मणे त्वप्राधान्यमिति मन्त्र-ब्राह्मणयोर्विरोधः स्यादिति। अवयवत्वं पुच्छत्वं वा ब्रह्मणो नाध्यानायोपयुज्यते प्रयोजनाभावादिति हि परेषामपि मतम्, तेन वस्तुतः प्रधानस्यैव ब्रह्मण आध्यानायावयवत्वकल्पनोपपत्तिरिति शङ्का न सावसरा।

अत्र सूत्रे—मान्त्रवर्णिकमिति नपुंसकनिर्देशेन आनन्दमयपर्यायगतात्मशब्दानुसारेण मान्त्रवर्णिकत्वं न स्वीकर्तव्यम्, किन्तु ब्रह्मैव गृहीत्वेति गम्यते। अत्रोभयप्राधान्यवादो यदि कैश्चनानन्दमय-पुच्छब्रह्मणोरनतिरेकमाश्रित्य कल्प्येत, तस्यापि निरासः कर्तव्य इत्येव सूत्रे---एवकारप्रयोगः।

एतेन---ब्रह्मपदस्य मन्त्रवर्णगतत्वेनोपक्रमस्थत्वेऽपि पुच्छवाक्यादानन्दमयवाक्यस्य प्राचीनतया तद्वाक्यार्थालोचनदशायामेवापेक्षितेन "आत्मन आकाशस्संभूतः" इति वाक्येन पूर्वमेवानन्दमयप्राधान्ये सिद्धे उपक्रमस्थेनापि पुच्छवाक्यार्थालोचनकालापेक्षिततया पश्चात्तनेन मान्त्रवर्णिकेन पदेन सञ्जातविरोधितया पुच्छप्राधान्यनिश्चयासंभव इति—परास्तम्।

मान्त्रवर्णिकसूत्रेणोपक्रमोपसंहारयोरैकरूप्यमेव प्राधान्य-

कारणं विवक्ष्यते, तच्च आनन्दमयवाक्येनैवोपसंहारेणैव भवति, न पुच्छब्रह्मवाक्येन। आनन्दमयवाक्येतु न ब्रह्मपदं मान्त्रवर्णिकं वर्तत इति स्पष्टं न तत्रोपसंहारः, पुच्छवाक्य एव तु तत् वर्तत इति तत्रैवोपसंहार इत्यवश्यमेव स्वीकर्तव्यम्। "आत्मन आकाशः संभूतः" इति तु ब्राह्मणमेव, नतु मन्त्रः, इति आत्मपदमादायैवोपक्रमोपसंहारौ, न मन्त्र-ब्राह्मणयोरुपक्रमोपसंहारौ। न ह्यात्मपदं मान्त्रवर्णिकम्। इदं च-"मान्त्रवर्णिकमि"ति नपुंसकपदेनापि सूच्यते।

यत्तु—पूर्वं त्रिभिः सूत्रैरुपक्रमोपसंहारावगतब्रह्मप्राधान्यस्यैवानन्दमयाप्राधान्यं प्रति हेतुत्वं प्रदर्शितमित्यनन्यलभ्यत्वाभावात् सूत्रवैयर्थ्यमित्युक्तम्।,

तत्र प्रथमसूत्रेणाभ्यासः, द्वितीयसूत्रेणाशङ्कापरिहारः, तृतीयेनाभ्यासादीनामानन्दमयविषयतावारणार्थमानन्दमयकारणत्वनिर्देशेन तच्छङ्कानिरासः, तुरीयेण न केवलमभ्यासः, किन्तूपक्रमोपसंहारैकरूप्यमपि तात्पर्यग्राहकं विविच्यते, इति न सूत्रवैयर्थ्यमिति द्रष्टव्यम्, इति तुरीयमपि सूत्रं नानन्दमयब्रह्मतावादसमर्थनायालम्। पञ्चम-षष्ठसूत्रे तु प्रधानस्यैव पुच्छब्रह्मण आनन्दमयोपसर्जनत्वमपि भवतु, न ह्येकत्र प्रधानस्यान्यत्र नाप्राधान्यमिति नियमः, अत एवादूगीथविचारावसरे शालावत्यप्रश्ने "स एष परोवरीयानुदूगीथः"इति मध्य उदगीथप्राधान्यमपि दृश्यते;तथाच पूर्वोत्तरयोः पुच्छब्रह्मसन्दर्भयोरप्यानन्दमयशेषत्वं भवत्विति शङ्कानिवारणार्थे।.तत्र प्रथमेन सूत्रेणानन्दमयशेषत्वं बाधितम्; उपक्रमोपसंहारावगतब्रह्मप्राधान्यविरोधेनानन्दमयविशेषणत्वकल्पनासंभवात्। नहि "स एष परोवरीयानुदूगीथः"इति वाक्यं यथोदूगीथविचारावसरगतम्, एवमानन्दमयविचारावसरगतं पुच्छवाक्यम्, प्रत्युत त-

द्विपरीतम्, इति केवलं ब्रह्मप्रकरणत्वाद् न तस्योपसर्जनत्वशङ्कावसरोऽपि।

एतेन—शालावत्यप्रश्ने—इदंलोकगतिप्रश्नस्यैव कृतत्वेन "आकाश इति होवाच" इति तदुत्तरवाक्यस्य परम्परया ब्रह्मगतिकं सामेत्यर्थ एव पर्यवसानेन न पूर्वसंदर्भस्य प्राधान्यपरत्वमिति दृष्टान्तायोग इति—परास्तम्।

सत्यं पूर्वसन्दर्भस्य न ब्रह्मप्राधान्यपरत्वम्, उद्गीथप्राधान्यपरत्वं तु वर्तत एवेति कथं दृष्टान्तायोगः? एतेन—दार्ष्टान्तिकोऽपि—व्याख्यातः; अन्नमयादिप्रायपाठानुसारेणात्राप्यानन्दमयोपासनकल्पनस्यावश्यकत्वेन तत्प्राधान्यवादस्यापि संभवात्। सर्वथातु नानन्दमयोपसर्जनत्वमिति पञ्चमसूत्रार्थः।

वस्तुतस्तूपास्य आनन्दमयो मिथ्यात्वात् न ब्रह्मप्रधानतामर्हति; सत्यस्यासत्योपसर्जनत्वायोगात्, सत्योपसर्जनं ह्यसत्यम्; तस्य तत्रारोपात्,इति भेदव्यपदेशसूत्रेण प्रतिपाद्यते। भेदव्यपदेशो नाम भेदविरुद्धोपदेशः, "यतो वाचो निवर्तन्ते"इति श्रुतिबोधितो बाध एव। यथाचास्य बाधे तात्पर्यम्, तथा पूर्वमेवोक्तम्। व्यपदेशशब्दो यद्यपि व्यवहार एव प्रसिद्धः, तथापि विशिष्टमपदेशम् अपदेशविशेषमपि कुत्रचन गोचरयति। यथा—"तद्व्यपदेशं च" तिसूत्रे।

इयान् विशेषः—तत्र विशिष्टोऽपदेशः=उपमानोपमेयभावव्यपदेशोऽपि तस्यैव तत्त्वविरोधित्वात् विरोध्येवापदेशः। सच दृष्टान्तस्थले स्वस्यैव स्वोपमानत्वानुपपत्तिरूपः, दार्ष्टान्तिकेतु आनन्दमयस्य पुच्छब्रह्मबाध्यत्वरूप इति। तथाच दृष्टान्ते यथा श्येनपदस्य द्रव्यपरत्वे वाक्यशेषविरोधः, स्वस्यैव स्वोपादानत्वानुपपत्तिनिबन्धनः, एवं प्रकृतेऽपि आनन्दमयस्यैव प्राधान्ये पुच्छब्रह्मबाध्यत्वनिरूपण-

परवाक्यशेषविरोधः समानः, इति युक्तम्—तद्व्यपदेशसूत्रमत्र दृष्टान्ततया गृहीतम्। विशब्दो हि विकत्थनम्, इत्यादौ विरोधेऽपि दृश्यते, अन्यत्रार्थान्तरेऽपि। तत्र प्रयोगानुसारिणी व्यवस्था; आरोपे सति निमित्तानुसरणम्, नतु निनित्तमस्तीति नैमित्तिकारोप इति न्यायात्तु 'वेदस्य विभाषते' इत्यादिप्रयोगापादनं निरवसरम्। नहि विधित्सितस्योपमानोपमेयभावेन निर्देश एव तद्व्यपदेशः; किन्त्वन्यथापि। अत एव—नामधेयत्वे निमित्तचतुष्टयमेवेति मते—"यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमि"त्यर्थवादव्यपदेशमहिम्नाऽपि नामत्वं निर्धार्यते। न ह्यत्र न्यायान्तरस्य प्रसङ्गोऽस्ति; विश्वदेवानां कर्तृतयैव निर्देशात्।

एतेन—'भेदमिथ्यात्वात्' 'भेदविरोधात्' 'भेदापवादात्' इत्येवं सूत्रं किमिति सूत्रकारो न प्रणिनायेति—शङ्कापि—परास्ता; विशेषाभावात्, विद्यमानपदेनाप्युक्तविधयार्थलाभात्। व्यपदेशपदप्रयोगे प्रयोजनान्तरं त्वनन्तरसूत्र एव व्यक्तीभविष्यति।

"कामाच्च नानुमानापेक्षा" इति सूत्रं स्थानसाम्यात् आनन्दमयप्राधान्यशङ्कावारणार्थम्। काम्यत इति कामः=भृगुवल्ल्याम्नात आनन्दः। तं दृष्टान्तमवलम्ब्यानन्दमयप्राधान्यापेक्षा न संभवतीति सूत्रार्थः। आनन्दमयः, प्राधान्येन प्रतिपाद्यः, पूर्वपूर्वनिषेधपुरस्सरपर्यवसितपञ्चमस्थानगतत्वात्, भृगुवल्लीगतानन्दवत्, इतितु पूर्वपक्षिणामनुमानम्। सिद्धान्तिनस्तु मन्यन्ते स्वरूपासिद्धोऽयं हेतुः। तत्रहि "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"ति श्रुत्यैवानन्द उपदेशस्य पर्यवसानमाम्नायते, न तथाऽनन्दमये। यदि वैषम्यमिदं सूत्रकारेण न सूत्रितं स्पष्टमिति मन्यते, तर्हि 'भेदव्यपदेशादि'त्यनुषज्यते। तथाच वैषम्येणोपदेशादिति हेतुलाभः। अनेन चेदमपि सूच्यते—भेदापवादादि-

त्यादिरूपेण सूत्रणं परित्यज्य भेदव्यपदेशादिति सूत्रणमेव योग्यम्, येनोत्तरत्राप्यन्वयो हेतुत्वेन स्यादिति।

एतेन—अवश्यवक्तव्यं हेतुं परित्यज्य प्रतिज्ञामात्रसूत्रणे सूत्रस्य न्याय्यनिबन्धनत्वासिद्धिः, वैषम्यादिति पदाध्याहारस्यायुक्तता चेति—परास्तम्।

आनन्दादिति सूत्रयितव्ये कामादितिपदं तु प्रधानवादस्यापि निरासार्थम्। आनन्दरूपत्वं तु प्रधानस्यापि सात्त्विकस्य तदनुकूलशक्तिमत्त्वेन साधारणम्, इति तदसाधारणकामस्यैव हेतुत्वं सूत्रयितुमुचितम्। कामस्त्वन्तःकरणपरिणामविशेषः, नाचेतनस्य प्रधानस्य संभवति। एतेन—अचेतनस्य प्रधानस्यानन्दरूपत्वासंभव इति—परास्तम्।

वस्तुतस्तु—प्रकाशमान एवानन्दोऽखण्डब्रह्मरूपः, नावृतोऽपि। तथाच केवलानन्दपदप्रयोगे न सोऽर्थः प्रतीयेत, इति तस्यापि भानार्थं "कामादित्येव" सूत्रणं युक्तम्। प्रकाशमानानन्द एव खलु भृगुवल्ल्यां समासिद्दश्यते, इति न कोऽपि विरोधः।

एतेन "अस्मिन्नस्य च तद्योगं शास्ती"तिसूत्रे तद्योगपदार्थोऽपि प्रकाशमानानन्दरूपब्रह्मभाव इति विवक्ष्यते इति—सूचितम्। अयं चार्थः तत्पदेन कामपदार्थप्रकाशमानानन्द एव विवक्षिते। तथाचैकैकेन सूत्रेण संभाविततत्तच्छङ्काविशेषनिरासेन पुच्छब्रह्मप्राधान्यवाद एव व्यवस्थाप्यते, इति न कस्यापि सूत्रस्य वैयर्थ्यम्। यावत्यो युक्तयः पुच्छब्रह्मप्राधान्यवादे संभाव्यन्ते, सर्वासां तासां संग्रहणमेव भगवत्पादाः सूत्रकाराश्च कर्तव्यं मन्यन्ते। यद्येकेनैव न्यायेन सिद्धान्तेऽवगते गुणसूत्राण्यपराणि वितथानीति मन्यते, तर्हि श्रीभाष्याभिमतसौत्रविवरणेऽपि समान एवायं दोषः। व्यक्तीकरिष्यते

चेदं तदीयसौत्रविवरणसमालोचनावसरे। सांप्रतं तु स्वमतसमर्थनमात्रसंदर्भ इति कृत्वा केवलं दोषाणां परिहार एव क्रियते तदापाद्यमानानाम्। पूर्वं सूत्रषट्कस्य पृथक् स्वतन्त्राशङ्कान्तरनिराकरणार्थत्वं प्रतिपादितम्। सप्तमेनापि स्वतन्त्राशङ्कैव निरस्यते। अष्टमेनतु सूत्रेण प्राप्यप्रापकभावेनानन्दमयब्रह्मणो निर्देशादपि नानन्दमयब्रह्मत्वमिति व्यवस्थाप्यते।

इदमत्रालोचनीयम्—"रसो वै सः। रसं ह्येवाऽयं लब्ध्वाऽनन्दीभवतीति" वाक्ययोः सशब्दार्थः, अयंशब्दार्थश्च क इति? यदि सशब्दार्थ आनन्दमयः, तर्ह्ययंपदार्थो विज्ञानमयः स्यात्। नच विज्ञानमयस्य "अनन्दीभवती"त्यानन्दीभावो हठाद् भवति, किन्त्वानन्दमयस्यैव। यदि—सशब्दार्थः पुच्छं ब्रह्म, तर्ह्ययंपदार्थ आनन्दमयः स्यात्। तत्र च "रसो वै स" इति आनन्दतादात्म्यं बोध्यमानमप्युपपद्यते, आनन्दमयस्यतु श्रीभाष्यमतरीत्याऽपि तद्गुणसारत्वेनैवानन्दत्वम्। सति चैवं पुच्छब्रह्मभावेनैवानन्दभावः। स चानन्दमयस्यैवेति "रसो वै सः" इत्यादिसन्दर्भार्थ इति वक्तव्यम्, इति कथमानन्दमयः प्राप्यं ब्रह्म स्यादिति, च इति युक्त्यभ्युच्चयः, इति न किमपि सूत्रमद्वैतमतेऽनर्थकम्।

श्रीभाष्यमते तु—विज्ञानमयेन जीवस्य विवक्षणात् जीवविलक्षणत्वस्य—"तस्माद्वा एतस्मादन्योऽन्तर आत्मे" ति वाक्येनैव स्पष्टमवगमात्—आनन्दमयो जीवो वा ब्रह्म वेति संशयस्यैवानुत्थानात्—सर्वमधिकरणं वितथम्। न केवलं वैयर्थ्यमात्रम्, किन्तु सौत्रपदानामपि तन्मत एव क्लिष्टकल्पना।

तत्रानन्दमय इति पक्षनिर्देशः, जीवभिन्नः इति साध्याध्याहारः, आनन्दपदचिह्नितवाक्यप्रतिपन्ननिरतिशयानन्दवत्त्वादिति, अवाङ्मनसगोचरत्वेनाभ्यस्यमानानन्दवत्त्वादिति वा हेतुरिति

ह्रि तन्मतम्। तत्र जीवादन्य इति साध्याध्याहारः, अभ्यासपदस्य हेतुपरस्य लक्षणयाऽर्थान्तरपरत्वमिति विशदोऽयं दोषः। अपरस्तु दोषः—प्रथमस्य हेतोरकामहतश्रोत्रिये व्यभिचारः, तत एव विरोधोऽपि। आनन्दमयो जीवः, आनन्दपदचिह्नितवाक्यप्रतिपन्ननिरतिशयानन्दवत्त्वात्, अकामहतश्रोत्रियवदिति। द्वितीयहेतोस्तु स्वरूपासिद्धिरस्मदृदृष्ट्या; "यतो वाचः" इत्यस्यानन्दमयाविषयकत्वस्य साधनात्। अप्रयोजकत्वशङ्का तु विशदैव। अभ्यासस्य तात्पर्यग्राहकप्रमाणस्य मुख्यतात्पर्यविषयतासाधकस्य तत्त्वाविवक्षा। तथाच प्रथमसूत्रं श्रीभाष्यमते स्वाभीष्टासाधकम्। तथाच श्रीभाष्यमते—केवलाभ्यासपदस्वारस्यभङ्गोऽपि दूषणम्। अद्वैतमतेतु आनन्दमयपदमात्रे पक्षनिर्देशपरे लक्षणा। सा तु सह्याः; सूत्राणां न्यायतात्पर्यवतां न्यायलाक्षणिकताया एवायोगात्, "सर्वत्र प्रसिद्धोपदेशात्" "अत्ता चराचरग्रहणात्" अन्तस्तद्धर्मोपदेशात्" इत्यादौ पक्षशब्दस्य सौत्रस्य लाक्षणिकताया उभयसम्मतत्वाच्च। निमित्तान्तरमादायानन्दमय इति प्रयोग इति तु "तद्धेतुव्यपदेशादि"ति सूत्रार्थसमालोचनावसरे वर्णयिष्यते।

एतेन द्वितीयसूत्रमपि व्याख्यातम्; अभ्यस्यमानानन्दातिशयवत्त्वे हेतौ निश्चिते विकारार्थकत्वशङ्काया एव नावसरः, अनिश्चिते च 'प्राचुर्यादि'ति प्राचुर्यार्थविवक्षाया अप्यसंभव इत्युभयतःपाशा रज्जुः। अकामहतश्रोत्रियस्यापि प्रचुरानन्दवत्त्वस्य श्रुतिसिद्धत्वेनानन्दप्राचुर्यस्य स्वविजातीयदुःखाल्पतानिरूपकत्वावश्यकत्वात् प्राचुर्यार्थत्वसाधनेनापि न जीवभेदसाधनम्। "द्वयचः छन्दसी"ति नियमविधिना सूत्रकारस्यापि प्राचुर्यार्थकत्वसाधनाशक्तिश्चेति नेदमपि सूत्रं सार्थकं तन्मते, किन्त्वद्वैतमत एव पूर्वोक्तविधया। अत्रेदं समालोचनीयम्—यत् विकारशब्दादिति

सूत्रे प्राचुर्यादित्यत्रैव विकारादित्येव निर्वाहे शब्दपदं किमर्थम् ? मयट इतिचेत्, इति सूत्रणमेव कुतो न कृतम् ? तथाच मयट इति प्रयोक्तव्ये विकारशब्दादिति सूत्रणादद्वैताभिमत एवार्थो गम्यते, इतिशब्दशब्दवैयर्थ्यमपि एकं मतान्तरे दूषणम्।

"तद्धेतुव्यपदेशादि"ति तृतीयसूत्रं तु—मयट आनन्दमय-पदे प्राचुर्यार्थकत्वव्यवस्थापनार्थमिति खलु तन्मतम्। तन्मते च प्राणमयादिष्वपि प्राचुर्यार्थकत्वमेवेति स्वीकारात् प्रायपाठस्यापि प्राचुर्यार्थकत्व एव साधकत्वात् विकारार्थकत्वशङ्कैव नोदेतीति पुनरपि दृढीकरणं किंप्रयोजनम् ? न तस्य किमपि प्रयोजनमिति विशदमिदं सर्वेषाम्। तदेवं सूत्रत्रयमपि आनन्दमय इत्यत्र प्राचु-र्यार्थकत्वमुपजीव्य प्रवृत्तं न कथमपि जीवभेदसाधकमिति न सिद्धा-न्तसाधनायालम्, यदि श्रीभाष्यकाराणामेव मतं सूत्रकाराणामपि मतम्। इदं पाराशर्यविजयमनुसृत्य समालोचितम्।

श्रीभाष्यकारास्तु—आनन्दमयपरमात्मत्वसधकमेवेदमधि-करणं मन्यन्ते ; तन्मतेतु ब्रह्मण उपस्थितत्वाद् न साध्यपदाध्याहा-रो दोषः ; अवाङ्मनसगोचरत्वेनाभ्यस्यमानानन्दवत्त्वादिति हेतो-रेव प्रथमसूत्रे विवक्षणात् हेतुदोषाः सर्वेऽप्यपरिहरणीयाः। एते-षामपि दृष्ट्या विज्ञानमयो हि बद्ध-मुक्तसाधारणजीव एव, इति "अन्योऽन्तर आत्माऽऽनन्दमयः"इति वाक्येनैव सिद्धत्वात् न संश-योत्थानमिति दोषो दुरपह्नव एव।

अपरं सूत्रद्वयं तु पूर्वोक्तरीत्या विज्ञानमय एव विकारार्थ-त्वत्यागात् प्राचुर्यार्थकत्वोपपादनासंभवाच्च वितथमेव, यदि प्राचुर्या-र्थोपपादकम्। उक्तंच श्रीभाष्ये—"औचित्यं च प्राणमय एव परित्य-क्तमि"ति। यदितु श्रीभाष्योक्तदिशा "तद्धेतुव्यपदेशात्" इति सूत्रमपि स्वतन्त्रमानन्दमयब्रह्मतासाधकम्, जीवानन्दयितृत्वोपदेशा-

दिति मन्यते, तदापि पूर्वपक्षिणां मते पूर्वोक्तरीत्या—"रसो वै सः" इत्यादिवाक्यसन्दर्भस्य पुच्छब्रह्मविषयकत्वेनानन्दमयविषयकत्वाभावात् स्वरूपासिद्धिः, "अस्मिन्नस्य च तद्योगं शास्ती" त्यनेनाप्यस्यैव हेतोर्विवक्षणात् पौनरुक्त्यम्। इदं हि तत्रत्यं श्रीभाष्यम्—"रसशब्दाभिधेयानन्दलाभादयमानन्दीभवतीत्युच्यमाने यल्लाभाद्य आनन्दीभवति; स स एवेत्यनुन्मत्तः को ब्रवीती"ति। अद्वैतमते तु आनन्दमयहेतुत्वमेव हेतुरिति न दोषः। अत्रेदमालोचनीयम्—यत् "तद्धेतुव्यपदेशात्" इत्यत्र न तत्पदेनानन्दस्य परामर्शः ? न ह्यत्रानन्दोपस्थापकं किमपि वर्तते। अद्वैतमते तु—आनन्दमयोऽभ्यासात्" इति शब्दोपस्थापित आनन्दमयः, इति आनन्दमयहेतुत्वव्यपदेशात्" इति सुष्ठु संगच्छते। एतेन—"ब्रह्म पुच्छमभ्यासात्" इति वक्तव्ये—"आनन्दमयोऽभ्यासात्" इत्यानन्दमयपदप्रक्षेपस्यापि निमित्तं सूचितम्; "तद्धेतुव्यपदेशाच्चे" ति सूत्रगततत्पदार्थसमर्पकत्वात्तस्य। तथाच श्रीभाष्यमते उक्तसूत्रगततत्पदार्थनिर्णायकाभावोऽप्यपरं दूषणम्।

केवलमानन्दशब्दः कथमानन्दमयपर इति शङ्कायां हि श्रीभाष्यकारा वदन्ति—एवमानन्दमयः परं ब्रह्मेति निश्चिते सति "यदेष आकाश आनन्दो न स्यात्" "विज्ञानमानन्दं ब्रह्मे" त्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते इति। अत्रानन्दरसादिशब्दानामानन्दमयपरत्वाधीनमानन्दमयस्य जीवानन्दयितृत्वेन परमात्मत्वम्, तत्परमात्मत्वनिश्चयाधीनं च रसानन्दादिशब्देन परामर्शनमित्यन्योन्याश्रयोऽपि दुष्परिहरः। मतद्वयेऽपि जीवादन्यत् ब्रह्मेनितु संप्रतिपन्नम्, को वा जीवः ? किं विज्ञानमयः ? उतानन्दमय इति चेत्, तत्र विज्ञानमयजीवत्वे प्रकारान्तरेणाधिकरणात् बहिरेव निर्णीते को वाऽवसर एतावतां सत्रसन्दर्भाणाम् ?

एतेन—"तुरीयं मान्त्रवर्णिकमेव च गीयते" इति सूत्रमपि—व्याख्यातम्; अनेनापि सूत्रेण—आनन्दमयो ब्रह्म मान्त्रवर्णिकत्वादिति खलु विवक्ष्यते। अत्रापि पूर्वपक्षिभिः स्वरूपासिद्धिरेव मन्यते। आनन्दमयो न मान्त्रवर्णिकं ब्रह्म, तत्रत्यब्रह्मशब्दासमानाधिकरणत्वात्, इति सत्प्रतिपक्षोऽपि। एतेन—अद्वैतमतेऽपि स्वरूपासिद्धिरिति शङ्कापि नेति—सूचितम्। अत्र मन्त्रवर्णेति वर्णपदप्रयोगात्, न त्वर्थतः, किन्तु वर्णतोऽपि मान्त्रवर्णिकत्वमपेक्ष्यत इति सूच्यते, इति ब्रह्मशब्दसामानाधिकरण्यमेव हेतुतया सूत्रकारैर्विवक्ष्यत इति वक्तव्यम्। तथाच श्रीभाष्यमते सूत्रगतवर्णपदस्वारस्यभङ्गोऽप्यपरं दूषणम्।

एतेन—गीयतेपदस्वारस्यमपि—व्याख्यातम्; गीयमानत्वं हि—"तदप्येष श्लोको भवती" ति श्लोकप्रतिपाद्यत्वमेव। तच्च मान्त्रवर्णिकब्रह्मशब्दस्यैव तत्र दर्शनात् पुच्छब्रह्मप्राधान्यमेव गमयति। तथाच—पुच्छं ब्रह्म, प्रधानम्, निगमनश्लोकप्रतिपाद्यत्वादित्येव सौत्रं तात्पर्यम्। इदं चाद्वैतमत एव स्वरसम्।

पञ्चमं तु सूत्रम्—"नेतरोऽनुपपत्तेः" इति श्रीभाष्य एवं व्याख्यातम्—परमात्मन इतरः=जीवशब्दाभिलाप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः; कुतः? अनुपपत्तेः। तथाविधस्यात्मनो निरवधिकं विपश्चित्वं नोपपद्यते। इदमेव हि निरुपाधिकं विपश्चित्त्वम्—"सोऽकामयत बहु स्यां प्रजायेये"ति सत्यसंकल्पत्वप्रदर्शनेन विवरिष्यते। विविधं पश्यत् चित्त्वं हि विपश्चित्त्वम्; पृषोदरादित्वात्। यद्यपि मुक्तस्य विपश्चित्त्वं संभवति; तथापि तस्यैवात्मनः संसारदशायां विपश्चित्वं निरुपाधिकं नोपपद्यते। निर्विशेषचिन्मात्रस्य मुक्तस्य दर्शनाभावात् सुतरां विपश्चित्वं न संभवति, न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्। किंचास्य मान्त्रवर्णिकस्य विपश्चितः "सोऽकामयते" त्यारभ्य वक्ष्यमाण संकल्पावधृतजगज्जन्म-स्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं स्पष्टमेव—इति।

अनेन यदि "सोऽकामयत" इत्यादिवाक्यशेषानन्वय एवानन्दमयजीवतानिरासे हेतुतया मन्यते, तर्हि "कामाच्च नानुमानापेक्षे"ति सूत्रं निरर्थकम् , अथवा तेनैवोक्तस्यार्थस्य सिद्धत्वात् इदं सूत्रमनर्थकमित्यन्यतरसूत्रानर्थक्यं दुरपह्नवम् । किञ्च—विज्ञानमयशब्देन यो जीवो विवक्षित,: स किं केवलं बद्धः ? उत बद्ध-मुक्तसाधारणः ? आद्ये—"भेदव्यपदेशाच्च" इति सूत्रेण—येन"विज्ञानमयादन्योऽन्तर आत्मे"ति वाक्यमनुसृत्यैवानन्दमयस्य ब्रह्मत्वं साध्यत इति श्रीभाष्यकारैर्मन्यते, तेन विज्ञानमयान्यत्वेनोपरि मुक्तात्मत्वमपि साध्येत, अथवा मुक्तात्मनि व्यभिचारात् परमात्मत्वं न साध्येतेत्यर्थान्तरादिप्रसङ्गः । द्वितीयेतु—तेनैव सूत्रेण गतार्थत्वादिदं सूत्रं वितथमिति सर्वविदितमिदम् । अपिच—"मान्त्रवर्णिकमेव च गीयते" इति सूत्रेण "सत्यं ज्ञानमिति"तिमन्त्रप्रस्तुतब्रह्मत्व आनन्दमयस्य साधिते श्रीभाष्यमतरीत्या सत्यज्ञानानन्तादिरूपत्वं मुक्तात्मनोऽपि न मन्यते, इति कथं मुक्तात्मनोऽमान्त्रवर्णिकस्य मान्त्रवर्णिकत्वशङ्कोदेति ? सति चैवं निरसनीयाशङ्काभावादपि सूत्रमिदं निष्प्रयोजनमापद्येत । इदं च विपश्चित्त्वानुपपत्तेरिति हेत्वर्थसंभवं स्वीकृत्योपपादितम् ।

वस्तुतस्तु—अनुपपत्तेरित्यस्य विपश्चित्त्वानुपपत्तेरित्यर्थः कथं सूत्रारूढः ? कथंच तस्य मुक्तजीवव्यावर्तकत्वमित्यपि चिन्त्यमेव । यतोऽद्वैतमतरीत्या अनेकजीववाद ईश्वरभावो मुक्तिरित्येव तदीयसिद्धान्तस्य सिद्धान्तलेशसंग्रहगतमुक्तात्मस्वरूपनिरूपणादौ श्रुति-सूत्र-भाष्यारूढत्वेन व्यवस्थापनेन जगद्व्यापारेण साकं ब्रह्मभावस्यैवाद्वैतमते मुक्तिस्वरूपत्वात् जगदाकारेण परिणममानाविद्याविषयत्वरूपाधिष्ठानत्वस्य शुद्धब्रह्मण्येव संभव इति संक्षेपशारीरकसिद्धान्ताच्च मुक्तात्मनो ब्रह्मभावमापन्नस्य जीवत्वस्यैवाभावात्

पुच्छब्रह्मणो यादृशं कारणत्वम् , तादृशस्य मुक्तात्मन्यपि स्वीकाराच्च विपश्चित्त्वादिकं ब्रह्मलिङ्गं सर्वं तत्र संभवति, इति परेषां दृष्ट्या स्वरूपासिद्धिः। श्रीभाष्यकाराणां परमतरीत्यापि न स्वरूपासिद्धिरिति स्थापनार्थम्—"निर्विशेषचिन्मात्रभावापन्नस्ये" त्याद्युपक्षेपस्तु नाद्वैतमतानुसारी।

तन्मतदृष्ट्यापि समालोचनायाम्—पूर्वतनानां हेतूनां मुक्तात्मपरमात्मसाधारण्यशङ्कायां खलु तद्व्यावर्तनार्थं सूत्रान्तरमपेक्षितम् ; हेत्वन्तरेण साधितस्यैवार्थस्य हेत्वन्तरेणापि साधनं त्वभ्युच्चयार्थं बहुशो दृष्टम्। स्वतन्त्राशङ्कातु सूत्रेण तत्रैव निरस्यते, यत्र पूर्वतनैस्सूत्रैर्न सापि निरस्तप्राया। "तद्धेतुव्यपदेशाच्च" इति सूत्रेण हि प्राप्यप्रापकभावो जीवानन्दमययोरवगम्यमानो जीवविलक्षणत्वमानन्दमयस्य ज्ञापयतीति श्रीभाष्यानुयायिनामेव मतम्। तत्रेदमेवालोचनीयम्—यन्मुक्तात्मप्राप्त्या जीवस्यानन्दः कुत्राप्यवगम्यते वा, नवेति। नाद्यः; प्रमाणाभावात् , द्वितीयेतु मुक्तात्मनोऽप्यानन्दमयप्राप्तिनिबन्धन एवानन्दानुभव इति तद्व्यावृत्तिरप्यर्थसिद्धैव, इति तेनैव मुक्तव्यावृत्तेरपि सिद्धेः का वाऽधिका शङ्का व्यावर्त्यते ? मान्त्रवर्णिकत्वविषये तु पूर्वमेवोक्तम् , इति जर्जरमिदं विवरणं न क्षोदक्षममिति भगवत्पादानुयायिनो मन्यन्ते। तन्मतेतु—पूर्वतनैस्सूत्रैः पुच्छब्रह्मणः प्राधान्यं प्रतिपाद्य, "नेतरोऽनुपपत्तेः" इति मान्त्रवर्णिकब्रह्मव्यतिरिक्त आनन्दमय आत्मा न प्राधान्येन प्रतिपाद्यते, इति पक्षान्तरनिरासार्थमिदं सूत्रमुत्तराणि च सूत्राणि। पूर्वतनसूत्रेषु हि मान्त्रवर्णिकमिति नपुंसकपदेन ब्रह्म, अन्यार्थतयाऽपि निर्दिष्टेनानन्दमयपदेनानन्दमयश्चोपतिष्ठतः। तत्रैकस्य प्राधान्यमपरस्याप्राधान्यम् , इति स्थिते इतर इति पुंलिङ्गेन पदेनानन्दमयः पक्ष एवोपस्थाप्यते, इत्यानन्दमयपक्षकाप्राधान्यव्यवस्था-

पन एव सूत्रस्याऽस्य तात्पर्यम्। तथाच—"मान्त्रवर्णिकमेव च" इति सूत्रगतैवकारव्यावर्त्यं एव विशदं सूत्रकारैरत्र निर्दिश्यते।

सति चैवम्—पुच्छं ब्रह्मैव प्रधानम्, अभ्यस्यमानत्वात्, तद्धेतुव्यपदेशात्, निगमनश्लोकप्रतिपाद्यत्वाच्चेति पूर्वतनसूत्रैः प्रतिपादिते—इतरः आनन्दमयः, न प्रधानः, अनभ्यासात्, पुच्छब्रह्मकार्यत्वात्, निगमनश्लोकाप्रतिपाद्यत्वाच्चेति, अभ्यासादीनामप्यानन्दमयविषयत्वयोजनानिरासार्थमेव "नेतरोऽनुपपत्तेः," इति सूत्रम्।

श्रीभाष्यकाराणाम्—"भेदव्यपदेशाच्च" इति सूत्रगतं विवरणम्—"तस्माद्वा एतस्मादात्मन आकाशः" इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्न-प्राण-मनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति—"तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः" इति। अतो जीवाद् भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायत इति।

विज्ञानामयजीवत्वं हि यद्यवस्थात्रयापन्नजीवत्वम्, तर्हि बाधितम्; स्वप्नाद्यवस्थायामिव सुषुप्त्यवस्थायां जीवस्य विज्ञानाभावात्। यदि जाग्रत्स्वप्नावस्थाद्वयवत्त्वमात्रम्, तर्हि विज्ञानमयान्यत्वात् जीवान्यत्वं विरुद्धम्, सुषुप्त्यवस्थापन्ने जीवे व्यभिचारश्च। तथाच—आनन्दमयः, जीवान्यः, विज्ञानमयान्यत्वादित्यनुमानप्रयोग एव यदि सूत्राभिप्रेतः, तर्हि हेतु-साध्ययोरैक्यम्, सौषुप्तजीवत्वमादाय सिद्धसाधनम्, तत्रैव व्यभिचारः, आनन्दमयो जीवः, विज्ञानमयान्यत्वात्, इति विरोधः, इत्यादिदूषणानां सत्त्वात् इदं सूत्रं यथाश्रुतं न व्याख्येयम्। 'भेदादि'ति सूत्रयितव्ये व्यपदेशपदवैयर्थ्यं च। व्यपदेशपदेन हि व्यवहारमात्रस्योपस्थापनात् भेदव्यावहारिकत्वं प्रतीयते, इति तत्र तत्र तत्पारमार्थिकतानिषेधार्थमेव व्यपदेशपदं प्रयुज्यत इत्यद्वैतिनो मन्यन्ते, इति तन्मते

व्यपदेशपदसाथक्यं सूत्रे भवति, श्रीभाष्यमते तु न प्रयोजनलेशोऽपि। तथाच "भेदव्यपदेशात्" इत्यनेन भेदव्यवहारादित्यर्थविवक्षणात् भेदमिथ्यात्वावगमात इत्यप्यर्थसिद्धमेव भवति, इति कृत्वैवाद्वैतिनो भेदव्यपदेशादित्यस्यैव भेदविरोध्यपदेशादिति विघृण्वते। सति चैवमार्थिकं मिथ्यात्वं शाब्दमपीति तदाशयः। एतादृशहार्दिकभावस्यात्र संकलने हेतुः मतान्तराभिमतविवरणादरणे-"अस्मिन्नस्य चे"ति सूत्रेणैव तदर्थस्यावगतत्वात् उक्तसूत्रवैयर्थ्यम्, पूर्वोक्तरीत्योक्तार्थस्याकृतकारित्वं चैव। तथाच न केवलं व्यपदेशापदसार्थक्यम्, किन्तु सूत्रसार्थक्यमप्यद्वैताभिमतार्थविवक्षण एव। किंच—विज्ञानमयोऽयं किं बद्धः, इत बद्धमुक्तोभयसाधारणः? आद्ये आनन्दमयस्य बद्धान्यत्वेऽपि मुक्तान्यत्वस्य पर्यायान्तरं विनाऽसंभवात् मुक्तान्यत्वसिद्धान्तविरोधः। द्वितीये तु किं प्रयोजनम्—"नेतरोऽनुपपत्तेरि" त्यस्य? अधिकं पूर्वमेवोक्तम्। यदि मुक्तस्यैवानन्दमयत्वाभावे बद्धस्यानन्दमयत्वे का कथेति मत्त्वा पूर्वेणैव बद्धस्यापि व्यावृत्तिः, तर्हि किं वा प्रयोजनमस्य सूत्रस्य?। एवं चात्राद्वैतिनामेव विवरणं शरणम्। वस्तुतस्तु—यत्रान्यत्वं स्वष्टमनाम्नातम्, तत्रैव भेदव्यपदेशाद् अन्यत्वं साध्यते—"भेदव्यपदेशाच्चान्यः" इत्यादौ, प्रकृते तु—स्पष्टमन्यत्वाम्नानात् तेन भेदसाधनपरतया विवरणं सूत्रशैलीविरुद्धमेव।

सप्तमं तु सूत्रम्—"कामाच्च नानुमानापेक्षा" इति। इदमत्र श्रीभाष्यकाराणां विवरणम्—"सोऽकामयत" इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः—"इदं सर्वमसृजत। यदिदं किंच" इत्याम्नायते। अतोऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते—इति।

इदमत्रालोचनीयम्—यत् नानुमानिकाचिद्वस्तुसंसर्गापेक्षेत्यनेन यदि देहानपेक्षसंकल्पादिमत्त्वं विवक्षितम्, तर्हि—आन-

न्दमयो न जीवः, आनुमानिकदेहानपेक्षसंकल्पादिमत्त्वादिति फलति। अत्रच शिरःपक्षादिमत्त्वेन शरीरसम्बन्धस्यानन्दमये प्रत्यक्षत्वात्, "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति विज्ञानमयपर्यायानन्तरवाक्येन स्पष्टं तस्य शारीरत्वावगमाच्च शरीरसम्बन्धानुमानिकत्वं पुच्छब्रह्मण्येव कल्पनीयम्, नानन्दमये। तथाच शरीरानपेक्षसंकल्पादिमत्त्वमपि नानन्दमये सिद्धम्, इति स्वरूपासिद्धिः प्रथमं दूषणम्, इति "सोऽकामयते"त्यादीनामपि पुच्छब्रह्मविषयकत्वमेवेति निष्कर्षः। द्वितीयं तु दूषणम्—पूर्वोक्तरीत्या "नेतरोऽनुपपत्तेरि" त्यनेनैव गतार्थत्वादेतत्सूत्रवैयर्थ्यम्, "कामाच्चे' त्यनेनैव निर्वाहे "नानुमानापेक्षे"ति सूत्रांशवैफल्यं तु तृतीयं दूषणम्, इत्यद्वैतिनां विवरणमेव शरणीकर्तव्यम्। वक्तव्यं चात्र सर्वं पूर्वमेव वर्णितम्।

"अस्मिन्नस्य च तद्योगं शास्ति" इति सूत्रव्याख्यानं तु श्रीभाष्यकाराणाम्—अस्मिन् = आनन्दयोगम्, शास्ति शास्त्रम्—"रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती"ति। रसशब्दाभिधेयानन्दमयलाभादयं जीव आनन्दीभवतीत्युच्यमाने यल्लाभाद् य आनन्दीभवति, स स एवेत्यनुन्मत्तः को ब्रवीति—इति।

इदं च "तद्धेतुव्यपदेशादि"त्यनेनैव गतार्थत्वात् वितथमिति पूर्वमेव सूचितम्। यत्तु—पूर्वत्र सामान्येन समस्तसुखहेतुत्वम्, अत्रतु मोक्षहेतुत्वमुक्तमिति वा, पूर्वत्रोपायनिर्देशः, अत्रोपेयनिर्देशो वा, इत्यादि श्रुतप्रकाशिकायामुक्तम्, तत्र विवरणद्वयेऽपि कर्तृकर्मभावेन वा, कर्तृसाधनभावेन वा भेदव्यवस्थायामेव तात्पर्यात् एकस्यैव कर्तृकर्मत्ववत्, कर्तृकरणत्वयोरप्यसंभवस्य न्यायसाम्येन सिद्धौ सूत्रद्वयवैयर्थ्यमपरिहरणीयमेव। परमार्थतस्तु—"भेदव्यपदेशात्" इत्यत्रैव सर्वेषामेषां वाक्यानां विवक्षणेन सर्वेष्टसि-

द्वौ व्यर्थान्येव बहूनि सूत्राण्येकस्यैव साधनार्थम् । तदेवं श्रीभाष्याभिमतविवरण एव बहूनां सूत्राणाम्, किं बहुनाऽधिकरणस्यैव वैयर्थ्यमिति हि परिस्थितिः।

तदयं संग्रहः—(१) "सोऽकामयत" इत्यनन्तरवाक्ये पुंलिङ्गशब्देनानन्दमयस्य परामर्शात्, (२) स्वस्मादनतिरिक्तैरवयवैः शिरःपक्षपुच्छादिभी रूपणाद्, (३) समुदायावयवविषयतया "तस्य पुच्छमि" ति षष्ठ्युपपत्तेः (४) निरतिशयानन्दे सदसद्भाशङ्कासंभवेन ब्रह्मानन्दानन्दमयशब्दानां पर्यायत्वेन चानन्दमयस्यैव श्लोकप्रतिपाद्यत्वात्, शेष्यत्वस्य वस्त्वानुरूप्येणानन्दमयेऽविरोधात्, (५) अवयवित्वस्यापि पुच्छत्वस्येव रूपणसंभवात्, (६) "तस्यैष एव शारीर आत्मा" इतिवाक्यशेषस्याप्यानन्दमय एव संभवात्, (७) स्वतःसिद्धनिरतिशयदशाशिरस्कानन्दाभ्यासस्यानन्दयितृत्वस्य, अभयहेतुत्वस्य, प्राप्यत्वस्य, निरुपाधिकविपश्चित्त्वस्य चानन्दमयार्थब्रह्मतायामेव स्वारस्याच्चानन्दमय एव प्रधानं ब्रह्म, न पुच्छं ब्रह्म; आनन्दमयस्य जीवत्वायोगात्। अयमत्रसंग्रहश्लोकः—

"पुंलिङ्गान्तप्रधानप्रकृतपरवचोरूपणं चाप्यनन्यैः
श्लोकाः पुच्छं नचाहुः सरसमपि हि नः सूत्रमन्योऽन्तरो न।
षष्ठ्यादिश्चांशभावान्निरतिशयतया रूपणादानुरूप्यात्
पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परास्तः" इति ॥

आनन्दमयस्य जीवत्वमेव, नतु ब्रह्मत्वम्; पुच्छस्यैव तत्त्वादिति मन्वानानामद्वैतिनां वादास्तु—(१) पुच्छब्रह्मण एव "तस्यैष एव शारीर आत्मे" ति सर्वान्तरात्मत्वेनोपदेशात् आत्मशब्दमभिप्रेत्यैव पुंलिङ्गप्रयोगेण "सोऽकामयते" ति तच्छब्दस्यापि पुच्छपरामर्शित्वस्यैव योग्यत्वात्, (२) प्राणमय-मनोमय-विज्ञानमयेषु स्वातिरिक्तैरेव शिरःपक्षादिरूपणेनानन्दमयेऽपि तदतिरिक्तैनैव तन्निरूपणस्यैव योग्यत्वात्, (३) आनन्दमयब्रह्मतायामानन्दमय-

ब्रह्मणोः समुदायावयवभावाभावात् कथंचन पुच्छशब्दबोध्यत्व मात्रेणैव ब्रह्मण आधारतया पुच्छत्वस्य विवक्षणीयत्वेन षष्ठ्या-अप्येवमेव स्वारस्यात्, (४) बद्ध-मुक्तसाधारणजीवव्यावृत्तेनानन्द-मयपदेन वारणं यदा मन्यते,तदा मुक्तानामपि निरतिशयानन्दस-द्भावासद्भावशङ्का, तैर्व्यवस्थापनीया, न च सा मुक्तदृष्ट्यापि संभव-तीति निरतिशयानन्देऽपि सदसद्भावशङ्काऽसंभवेन, ब्रह्मानन्दशब्दयोः पर्यायत्वेऽपि कुत्राप्यानन्दमयशब्दस्योभयसंप्रतिपन्नतया ब्रह्मपरत्वा-भावेन ब्रह्मनन्दमयशब्दयोः पर्यायत्वासंभवेन चानन्दमयस्य श्लो-काप्रतिपाद्यत्वात्, प्रत्युत "मान्त्रवर्णिकमेव च गीयते" इति सूत्रेण नपुंसकब्रह्मण एव गीयमानत्वेन श्लोकप्रतिपाद्यत्वव्यवस्था-पनात्, (५) "अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्ताम्" इत्यत्र मेपदस्य स्वारस्येनावस्थाविशेषापन्नजीवस्यै-वान्नमयादेरिव शोध्यत्वावगमेन वस्त्वनुरूपत्वेऽपि शोध्यत्वस्यान्न-मयादिसाधारणस्यैव तस्य विवक्षणीयत्वेनानन्दमयब्रह्मतायां तद्विरोधात्, (६) स्वरूपचैतन्यमात्रस्यैव ज्ञेयत्वेन पुच्छत्वस्य रूपणाभावेन "पुच्छत्वस्येव" इति दृष्टान्तासंप्रतिपत्त्या "आत्मशा-ब्दाच्च" इत्याध्यानायाधिकरणगुणसूत्रेण ब्रह्मणोऽवयवविधया रूपण-स्याभावेन दार्ष्टान्तिकस्याभावेन चाधिष्ठानलक्षणया पुच्छत्वेन निरू-पणसंभवेऽप्यवयवितया रूपणासंभवात्, (७) "तस्यैष एव शारीर आत्मा। यः पूर्वस्य" इति वाक्यस्य पर्यायान्तरेष्विव स्वपर्याय-प्रतिपाद्यावयविनोऽप्यन्तरस्यात्मान्तरस्य व्यवस्थापनेन पुच्छब्रह्म-सर्वान्तरतायामेव स्वारस्येन तस्यानन्दमये प्रवृत्त्यसंभवात्, (८) बृहदारण्यकचतुर्थाध्यायगतैतत्सजातीयानन्दमीमांसाया इव निरति-शयशिरस्कानन्दाभ्यासस्य "स एको ब्रह्मण आनन्दः" इत्येतद-न्तस्य समष्ट्यानन्दमयविषयकत्वेन ब्रह्मविषयकत्वाभावस्य स्पष्टं

जिज्ञासाधिकरण एव वेदान्तरक्षामणौ व्यवस्थापनेन ब्रह्मविषयकत्वाभावेन तस्यानन्दमयब्रह्मताऽसाधकत्वात्, (९) अनन्दयितृत्वाभयहेतुत्व-प्राप्यत्व-निरुपाधिकविपश्चित्त्वादीनां पुच्छब्रह्मण्येव स्वारस्याच्च पुच्छं ब्रह्मैव प्रधानम्, नानन्दमयः; आनन्दमयस्य मयडन्तपदप्रतिपाद्यत्व-शोध्यत्व-श्लोकगतसदसद्भावशङ्काऽयोग-शिरःपक्षादियोगप्रयुक्तशारीरत्वादिभिर्जीवत्वस्यैव योगात्—इति ।

माण्डूक्यश्रुत्येकवाक्यताप्यानन्दमयजीवतायामेव भवति-नतु तद्ब्रह्मतायामिति तु युक्त्यन्तरम् । तथाहि—

न केवलं बृहदारण्यकोपनिषच्चतुर्थाध्यायगतानन्दमीमांसैकवाक्यतया, किन्तु माण्डूक्यश्रुत्येकवाक्यतयापि तैत्तरीयोपनिषद् आनन्दमयाधिष्ठानशुद्धतुरीयचैतन्यपरत्वम् । तत्रहि—"सर्वं ह्येतद् ब्रह्मायमात्मा सोऽयं चतुष्पात् । जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः । यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति, तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः । एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् । नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः'' इति चतुष्पादात्मेति विभज्यानन्दमयस्य तृतीयपादत्वं प्रतिपाद्य तुरीयस्यैव ज्ञेयात्मत्वं प्रतिपाद्यते । तत्र तुरीयस्य—"न प्रज्ञम्'' इति तृतीयानन्दमयभिन्नत्वम्" एकात्मप्रत्ययसारमिति सर्वान्तरत्वम्, "प्रपञ्चोपशममि''ति सर्वप्रपञ्चाधिष्ठानत्वं

प्रतिष्ठारूपं पुच्छपदलक्ष्यम् "अद्वैतम्" इति वाङ्मनसागोचरत्वम्, शिवमित्यानन्दरूपत्वमेव, न त्वानन्दमयत्वम्, "अलक्षणम्" इति शिरःपक्षादिराहित्येन निरवयवत्वेन निर्धर्मकत्वेन वा स्वस्वरूपातिरेकेण केनचन धर्मेणालक्ष्यत्वं च प्रतिपाद्यते। अनेन च पुच्छमेव ब्रह्म तैत्तरीयोपनिषदर्थस्तुरीयपादतया माण्डूक्यश्रुत्यापि निरूप्यत इति विशदीक्रियते।

अयं चार्थो वेदान्तसारे—अन्नमयादिकोशानां पादत्रये व्यष्टिरूपेण समष्टिरूपेण चान्तर्भाव इति विवेचनेन विशदीक्रियते। तत्र प्रथमः पादोऽन्नमयकोशावच्छिन्नो जीवो जागरितावस्थः, द्वितीयः पादः—प्राणमय-मनोमय-विज्ञानमयाख्यकोशत्रयपदवाच्यसूक्ष्मशरीरावच्छिन्नः स्वप्नावस्थो जीवः, तृतीयः कारणशरीराख्यानन्दमयकोशावच्छिन्नः सौषुप्तो जीवः, तुरीयं तु शुद्धचैतन्यमिति प्रतिपादनात् माण्डूक्य-तैत्तरीययोरैकार्थ्यमेव व्यवस्थाप्यते। अत्रच कारणम्—तृतीयपादे आनन्दमयपदप्रयोगेणानन्दमयवाक्येनैकार्थ्यप्रत्यभिज्ञानमेव। सति चैवमुपनिषत्त्रयस्याप्यैकार्थ्यमानन्दमयब्रह्मतावादे न संभवति, किन्तु पुच्छब्रह्मतावाद एवेति, ततोऽपि पुच्छब्रह्मवाद एवौपनिषदानां शरणीकर्तव्यः; "आनन्दमयोऽभ्यासात्" इत्यादिसूत्राणामपि सर्वेषामत्रैव सार्थक्यम्।

एतेन—कण्ठतः सूत्रकृदुक्तेषु हेतुषु न कश्चिदपि त्वदभीष्टसाधकः। संभवत्येकवाक्यत्व इत्यपि ममैवानुकूलम्; एकवाक्यतया महाप्रकरणस्यानन्दमयपरतयैव योजनसंभवादित्यादि—परास्तम्।

यथाच कस्यापि सौत्रहेतोर्मतान्तरे न समन्वयः एव, स्वरसार्थपरित्यागेनाभ्यासादिपदानां लाक्षणिकार्थत्वेन सौत्रहेतूनां नयनं च, तथा बहुशः पूर्वमुपपादितम्। तथाच बहूनां पदानां सौत्राणां प्रतीयमानार्थपरित्यागेन लाक्षणिकार्थग्रहणापेक्षया

"आनन्दमयः" इति पक्षनिर्देशपरस्य लाक्षणिकार्थवर्णनमेव वरम्। इदमपि स्पष्टप्रतिपन्नश्रुत्यर्थानुगुण्यार्थमेव।

अत एव—"लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तदर्थान्येव सूत्रेष्वप्यवगन्तव्यानी"ति वाक्ये भगवता शबरस्वामिना "सति संभवे" इति प्रयुक्तम्। अनेनासति संभवे सूत्रेष्वपि लक्षणादिकमध्याहारादिकं चाऽङ्गीकर्तव्यमेवेति सूच्यते। विशदीतकृश्चायमेवार्थः कुमारिलपादैरपि श्लोकवार्तिके बहुतर-सूत्रेष्वध्याहारादिनैव व्याख्यानमिति तत्तदुदाहरणप्रपञ्चनेन। युक्तं चैतत्। सन्दिग्धार्थनिर्णयार्थानि हि सूत्राणि। न ह्यानन्दमयपदार्थे विज्ञानमयान्यत्वादौ संशयलेशोऽपि, इति न तदर्थनिर्णयार्थ-मधिकरणमपेक्षामहे।

एतेन—तत्तदुपनिषद्वाक्यार्थविषयेऽप्रतिपत्ति—विप्रतिपत्त्यन्यथाप्र-तिपत्तिनिवारणपूर्वकमनन्यथासिद्धप्रमाणान्तरसध्रीचीनतर्कसाचिव्येन वि-शदीकरणार्थं प्रवृत्ते परमर्षिवेदव्यासविहिते सूत्रजाले तुल्यबलेतदृश-व्याख्यानान्तरविरोधगन्धरहिते आकाश-प्राण-ज्योतिराद्यशेषोत्तराधि-करणेष्विवानन्दमयं ब्रह्मेत्येवं तत्तत्सूत्रस्वरसप्रतिपन्नार्थस्य बाधकल्पना-योग इति—परास्तम्।

न्यायनिबन्धनपरे सूत्रे न्यायस्वरूपे लक्षणादिकल्पनमेव हि दोषः, नतु विषयवाक्यनिर्देशपरे भागे; तस्य सन्दिग्धांशमात्रोप-स्थापकत्वात्। अत एव—"अन्तस्तद्धर्मोपदेशात्" इत्यन्तःपदमात्रं विषयवाक्यस्य सर्वस्योपस्थापकं निर्दिश्यते, नतु "य एषः" इति पदद्वयमपि, यदर्थ एव मुख्यतया निर्धारणीयः। आकाश-प्राण-ज्योतिःपदेषु तु यद्यपि तदर्थ एव निर्धारणीयः; तथापि नायं नियमः—यत् सन्दिग्धं पदमेव प्रथमाध्यायप्रथमपादे निर्दिश्यते इति। नहि—"अथातो 'ब्रह्मजिज्ञासे'त्यारभ्येक्षत्यधिकरणान्तेषु तथा निर्देशो

वर्तते; तत्र यथा सामान्यतः छान्दोग्यगताध्यायविशेषो व्यवस्थाप्यः; एवमानन्दमयाधिकरणेऽपि तैत्तरीयगतानन्दवल्ल्यर्थः सर्वोऽपि निर्धार्यः। अत एव "मान्त्रवर्णिकमेव च गीयते" "कामाच्च नानुमानापेक्षे"त्यादिना सर्वमपि ब्रह्मवल्लीप्रकरणमत्रोपक्षिप्यते, इति नात्रापि पदविशेषमात्रार्थो निर्धारणीयः; आकाशादिशब्दानामिवानन्दमयशब्दस्य रूढत्वाभावात्। "आकाशस्तल्लिङ्गात्" इत्यादावप्याकाशादिपदं पूर्वपक्षसूचनार्थमेव। न ह्यत्रानन्दमयपदं पूर्वपक्षबीजम्। तथाच स्पष्टब्रह्मलिङ्गवाक्यसमन्वयपादत्वादस्य न पदविशेषार्थनिर्णयः प्रधानं लक्ष्यम्; प्रथमाध्यायचतुर्थपादार्थत्वात्तस्य। तत्रापि निर्णेयानि पदानि न कुत्रापि सूत्रेषु निर्दिश्यन्ते। तद्यथा—आनुमानिकाधिकरणे आनुमानिकपदमेव वर्तते, नतु श्रुतिगताव्यक्तादिपदम्। एवं चमसाधिकरणेऽपि। तत्रापि हि न निर्णेयाजाशब्दः सूत्रकारैर्निर्दिश्यते। एतेन—न संख्योपसंग्रहादि"त्यपि—व्याख्यातम्; पञ्चपञ्चजनशब्दानुल्लेखात्। "कारणत्वेन चाकाशादिषु" इत्यादावप्येवमेव। सति चैवं यदर्थनिर्णये सूत्रस्य तात्पर्यं तस्यैव शब्दतो निर्देशः सूत्र इति नायं नियमः। एतेन—"प्राणस्तथानुगमात्" इत्यधिकरणमपि—व्याख्यातम्। नहि तत्र प्राणपदार्थमात्रं निर्णेयम्, किन्तु मांपदार्थोऽपि। तथाचैकदेशानुवादः सूत्रे सर्वस्य वाक्यस्य प्रकरणस्य वोपस्थापनायेत्येव स्वीकर्तव्यम्। एवं चानन्दमयपदमपि तत्पर्यायोपस्थापकमित्येव, इत्यवचनसिद्धम्। आनन्दमयवाक्ये तु पूर्वोक्तरीत्या विज्ञानमयभिन्नत्वस्य सिद्धत्वात् न संशयः। पुच्छ ब्रह्मवाक्ये तु कथं पुच्छत्वं ब्रह्मण इति संशयो मतद्वयसाधारण एव। तत्र चाभ्यासेन तात्पर्यग्राहकप्रमाणेन तदविवक्षितत्वेऽथवाऽऽधारलक्षकत्वे तद्वाक्यस्य ब्रह्मसमर्पकत्वम्, अन्यथा तु प्रकारान्तरेण केनापीति वक्तव्यम्।

नचात्र प्रकारान्तरं किमपि सूत्रकारैः सूत्रितमिति प्रथमपक्ष एव सूत्राभिमत इति प्रतीयते। तथाच—सौत्रेण पदेन निर्णीत-सन्दिग्धांशद्वयघटितवैदिकवाक्योपस्थापने सन्दिग्धांशपरत्वमेव सूत्रस्य। अतः प्रधानवेदाविरोधार्थं सूत्रान्यथानयनमपि न दोषाय। इयमेव हि नीतिः श्रीभाष्यकारैरपि सूत्रव्याख्यानावसरे सामान्यतः, विशिष्य च—"आनन्दमयोऽभ्यासात्" इति सूत्रगताभ्यासपद-विवरणावसरे चावलम्ब्यते; तैरपि तत्र लक्षणाया एव स्वीकारात्। आनन्दमयपदेन तदर्थस्यैव निर्णेयत्वमिति स्वीकारे हि न केवलं सौत्राभ्यासपदस्य, किन्तु—"असन्नेव स भवति" "तस्यैष एव शारीर आत्मा" "यतो वाचो निवर्तन्ते" "अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्ताम्" "रसो वै सः" "आनन्दो ब्रह्मेति व्यजानात्" "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति" इत्यादिवैदिकवाक्यानामपि क्लिष्टकल्पनयाऽन्यथानयनं कर्तव्यं समापतति, पुच्छब्रह्मवादे तु केवलमानन्दमय-पदे पक्षपरे।

एतेन—आर्षव्याख्यानादिभिर्यथाश्रुतार्थस्यैवादृततया सूत्राणामन्यथा नयनं बादरायणानभिमतमि" ति—परास्तम्।

श्रुतिविरोधे हि स्मृतिवाक्यानामप्यन्यथा नयने कैव कथा सूत्रेषु, इति श्रुत्यविरोधार्थं स्मृतिष्विव सूत्रेष्वपि लक्षणा न दोषः। इदमेवाभिप्रेत्य—"सति संभवे" इति प्रथमवाक्ये शबर-स्वामिना प्रयुक्तम्। भामत्यामपि—गुणे त्वन्याय्यकल्पनेति न्यायेन सूत्राणामेवान्यथानयनमिति।

सत्यं व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायविदो मन्यन्ते, परंतु सन्देहस्थले एव। तत एव—"नहि सन्देहादलक्षणमि"ति वाक्यशेषः। सूत्रं तु व्याख्यानरूपं हेत्वंशे, न विषयवाक्यांशे;

तत्रानुवादस्यैव स्वीकरणीयत्वात्। तथाचायं न्यायो हेतुपदलक्षणिकतापक्षस्यैव विरोधी, नतु पक्षांशलक्षकतापक्षस्य। एवंच भवन्त एव भावयन्तु—के वा पारमर्षसूत्रव्याख्यानमपि महर्षिकर्तृकं निर्भयं परित्यजन्तीति। ब्रह्मसूत्रव्याख्यानेषु तु परस्परविरुद्धेषु न कर्तृगौरवमात्रेण स्वस्वाभिमतेन व्याख्यानविशेषप्राबल्यं निर्धारयितुं शक्यते। स्वरसतः सूत्रानुगुणं व्याख्यानं प्रबलम्, अन्यद् दुर्बलमित्येव स्वीकर्तव्यम्। स्वारस्यं च सूत्राणामद्वैतमत एवेति बहुशो निरूपितम्। यतोऽन्येषु व्याख्यानेषु पूर्वोक्तरीत्या बहवः श्रुतिविरोधा दृश्यन्ते। प्रदर्शिताश्चैते पूर्वमेव।

एतेन—कस्मिन्नंशे श्रुति-सूत्रयोर्विरोधो दृश्यते, येन 'गुणे त्वन्याय्यकल्पने'ति न्यायोऽवकाशेत, श्रुतावन्याय्यकल्पनाप्रसक्तौ किलैतन्न्यायप्रवृत्तिरभिमतेति—परास्तम्।

इदमेवाभिप्रेत्योक्तं परिमले—"पौरुषेयसूत्रविषये स्वायत्ते शब्दप्रयोगे किमर्थं श्रुतिविरोधभ्रमापादकसूत्रप्रणयनम्? इति तत्र लक्षणाध्याहारादिभिरनेकार्थप्रत्यायनम्" इति। अनेन चेदमेव ज्ञाप्यते—यत् "आनन्दमयोऽभ्यासात्" इति सूत्रादिकमधिकरणमद्वैतपरमेवेति। अन्यथा हि—"तस्यैष एव शारीर आत्मे" त्यादिविप्रतिपन्नवाक्यानामन्यथानयनेन मतान्तराभिमतविवरणसमर्थनार्थमपि कथं न सूत्राणि रचितानि, इति तेषां यथाश्रुतार्थ परित्यागे कारणाभावात् सूत्रानारूढस्वतन्त्रकल्पनाप्राचुर्यात्, पूर्वोक्तरीत्योपनिषत्त्रायैकवाक्यताभङ्गापत्तेश्च पुच्छब्रह्मवाद एव सूत्रकृदभिमत इति निश्चीयते।

अभ्युपगम्यते हि श्रीभाष्यकारैः—सूत्रार्थनिर्णये विष्णुपुराणमत्यन्तमुपकरोतीति। षष्ठांशषष्ठाध्यायगतानि वचनानि तु कानिचानाघः संगृह्यमाणानि पुच्छब्रह्मवादमेवोक्तप्रकरणार्थं मन्यन्ते इति

विशदमिदं सर्वेषाम् । तथाच तदविरोधेन सूत्राणां योजनमेव समुचितम् । तानीमानि विष्णुपुराणवचनानि—

पशुभ्यो मनुपजाश्चाति शक्त्या पुंसो विभाविताः ।
एभ्योऽपि नग-गन्धर्व-यक्षाद्या देवता नृप ॥
शक्रस्समस्तदेवभ्यः ततश्चाति प्रजापतिः ।
हिरण्यगर्भोऽपि ततः पुंसः शक्त्योपलक्षितः ॥
एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव ।
अमूर्तं ब्रह्मणो रूपं यत् तत्सदित्युच्यते बुधैः ॥
समस्तशक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥" इति ॥

अत्र "समस्तशक्तयश्चैताः" इत्यनेन "ब्रह्म पुच्छं प्रतिष्ठे" ति वाक्यमर्थतोऽनूद्यते । "अमूर्तं ब्रह्मणो रूपमि" त्यनेन तु "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि"ति पुच्छब्रह्मश्लोकार्थः संगृह्यते । पशुभ्य इत्यारभ्य – "एतान्यशेषरूपाणि" इत्यन्तानि वचनानि हिरण्यगर्भान्तानां तत्कार्यत्वप्रतिपादनद्वारेण "सोऽकामयते"ति वाक्यस्य सानन्दमयविकारहेतुत्वं प्रतिपादयन्ति । अत्र—प्रजापतितोऽधिको हिरण्यगर्भ इति स्पष्टं वर्णनात्—"स एको ब्रह्मण आनन्दः" इत्यत्र हिरण्यगर्भस्य कार्यब्रह्मण एव ग्रहणम् , न मुख्यब्रह्मण इति सूच्यते । तथाच निरतिशशिरस्कतयाऽभ्यस्यमानत्वरूपः सौत्रो हेतुरपि हिरण्यगर्भपर्यन्त एव, नतु शुद्धब्रह्मपर्यन्त इति ज्ञाप्यते, इति तस्य मुख्यब्रह्मतासाधकत्वं न भवतीति सूच्यते । तथाच—"आनन्दमयोऽभ्यासात्" इति सूत्रस्यानन्दमयब्रह्मतायां साधकत्वाभावो विष्णुपुराणवचनानामपि सम्मत इति प्रतीयते । अत एव—"तस्मात्समस्तशक्तीनामाधारे यत्र चेतसः । कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥"इति प्रकृतप्रकरणोपसंहारः पुच्छब्रह्मपदेन शुद्धं चैतन्यमेवेति ज्ञापयन्नुपप-

ध्यते, इति न केवलमुपनिषत्त्रयेण पूर्वोक्तविधया पुच्छब्रह्मवाद एकवाक्यता, किन्तु विष्णुपुराणेनापि। यत्र—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मसंज्ञितम्॥"

इति प्रकृतप्रकरणोपक्रमेऽवाङ्मनसगोचरत्वन निर्गुणमेव चैतन्यं प्रस्तूयते। तथाच—"यतो वाचो निवर्तन्ते" इत्यस्यापि प्रपञ्चबाधपर्यवसायितायामेव तात्पर्यमिति विष्णुपुराणमपि प्रमाणयति।

"विज्ञानमयतस्तस्मादानन्दमयशब्दितः
आन्तरो ह्यन्य एवायमात्माऽव्याकृतरूपधक्।"
"यस्यावगमसंप्राप्त्यै कोशपञ्चकमीरितम्।
अस्य पुच्छं प्रतिष्ठेति तदेवोक्तं मनीषिभिः॥"
"आनन्दात्मानमात्माऽयमात्मत्वेनाधिगच्छति।
प्रजापतेः शतं ये स्युरानन्दा एक एव सः।
भवेत् परम आनन्दो ब्रह्मणः सूत्ररूपिणः।

अस्मात् परो न कोऽपि स्यादानन्दो देहिनामिह।
आनन्दात्मानमराकाशं मुक्त्वा स्वयंप्रभम्।"

इत्यात्मपुराणे "स एको ब्रह्मण आनन्दः" इत्यानन्दमयात्मतामभिप्रेत्य सूत्रात्मैव ब्रह्मपदार्थ इति यद्विवेचितम्, इदमपि विष्णुपुराणगतम्—"शक्रस्समस्तदेवेभ्यः ततश्चाति प्रजापतिः। हिरण्यगर्भोऽपि ततः पुंसः शक्त्योपलक्षितः" इति वचनांशमादायैव प्रवृत्तमिति विष्णुपुराणैकवाक्यतापन्नमेवात्मपुराणमपि पुच्छब्रह्मवादमेवोसंपहरति।

भगवान् वेदव्यासोऽपि—अग्निपुराणे—३७९ तमेऽध्याये—

अहं ब्रह्म परंज्योतिर्जाग्रत्स्थानविवर्जितम्।
अहं ब्रह्म परं ज्योतिर्विश्वभावविवर्जितम्॥

अहं ब्रह्म परं ज्योतिः स्वप्नावस्थाविवर्जितम् ।
अहं ब्रह्म परं ज्योतिस्तैजसादिविवर्जितम् ॥
अहं ब्रह्म परं ज्योतिः सुषुप्तिस्थानवर्जितम् ।
अहं ब्रह्म परं ज्योतिः प्राज्ञभावविवर्जितम् ॥
जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं ब्रह्म तुरीयकम् ।
नित्यशुद्धबुद्धमुक्तं सत्यमानन्दमद्वयम् ॥
ब्रह्माहमस्म्यहं ब्रह्म सविज्ञानं विमुक्त ओम् ।
अहं ब्रह्म परं ज्योतिः समाधिर्मोक्षदः परः ॥" इति

माण्डूक्यश्रुत्यर्थं संगृह्णानः प्राज्ञशब्दशब्दितानन्दमयेन ब्रह्मोपदेशसमाप्तिं वारयतीति सर्वविदितमिदम्। तथाच स्वयं बादरायणेनैवानन्दमयाब्रह्मतायाः पुराणेष्वपि साधनात् कथमेतद्व्याख्यानविरुद्धमन्येषां महर्षीणामपि विवरणं सूत्राणां समादतुं शक्यम् ?

पैङ्गलोपनिषदि "द्वितीयाध्यायेऽपि—अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः पञ्चकोशा इत्युपक्रम्य—"स्वरूपाज्ञानमानन्दमयकोशः, तत्कारणशरीरमि"त्यादिना विश्व-तैजसादिभेदेन भिन्नः व्यष्ट्यात्मकः समष्ट्यात्मकश्च जीव एवानन्दमय इति विशदं प्रतिपाद्यते। न केवलं पैङ्गलोपनिषदि, किन्तु सर्वसारोपनिषद्यपि पञ्चकोशनिरूपणप्रकरणमस्यार्थस्योपष्टम्भकमेव। सुबालोपनिषदपि—द्वितीयानुशासनान्ते—"नान्तःप्रज्ञो न बहिःप्रज्ञो नाभयतःप्रज्ञः न प्रज्ञानघनो न प्रज्ञः" इत्यादिना माण्डूक्योपनिषदमेवानुकरोति, इति साप्यात्रानुकूलैव।

यथाच—"प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे"इत्यादिसूत्राणामप्यद्वैतमत एव स्वारस्यम्, तथा पूर्वमेवोपपादितम्। यत्तु—अद्वैतमते निर्भेदे ब्रह्मणि प्रिय-मोदादिस्वरूपमात्रसम्बन्ध-

स्यापि निर्भेदत्वविरोधित्वेनानिष्टतयोपचयापचयरूपशिरआदिगतधर्मपर्यन्तानुधावनं विफलमेव, न केवलमिदम्, किन्त्वद्वैतमते प्रियशिरस्त्वादीनामानन्दमयपदवाच्यजीवसम्बन्धित्वेन पुच्छब्रह्मासम्बन्धात् कथं प्रियशिरस्त्वादीति सूत्रोत्थानमिति परपक्षनिराकृतिकाराः—वदन्ति, तत्रेदमेवास्माकं वक्तव्यम्, यत्—श्रीभाष्यमतेऽपि—"आध्यानाय प्रयोजनाभावात्" इत्यत्र तदुक्तरीत्या प्रियशिरस्त्वदीनामानन्दमयब्रह्मतायामपि ब्रह्मसम्बन्धाभावस्यैव सम्मतत्वात् उपचयापचयरूपशिरआदिगतधर्मपर्यन्तधावनवैफल्यम्, एवमानन्दमयब्रह्मासम्बन्धात् प्रियशिरस्त्वाद्यप्राप्तिरिति सूत्रानुत्थानं च दूषणं समानमेव, इति "यश्चोभयोः समो दोषो न तत्रान्यतरः पर्यनुयोज्यः" इति न्यायेन नोक्तदूषणापादनं बाधकम्। तत्र यदि ब्रह्मणो बुद्धावारोपार्थमेव तद्रूपणम्, तर्ह्यत्रापि तत् समानमेव। तथाच सत्त्वादीनामिव कल्पितत्वाविशेषेऽपि तद्धर्मिस्वरूपत्वाभावाद् नोपसंहार इति बोधनेनाद्वैतमते तत्सूत्रसाफल्यादिकं संभवत्येव।

एतेन—कोशधर्मत्वाविशेषात् प्राणशिरस्त्वाद्यप्राप्तिरपि किमिति न साध्यते इति शङ्कापि—परास्ता।

प्राणशिरस्त्वादिकं तु न ब्रह्मप्रतिपत्तौ मुख्यतयोपयुज्यते, प्राणमयादन्यस्यात्मन उपदेशात्, इति परैरपि वक्तव्यम्, अन्यथोक्तस्य पर्यनुयोगस्य तैरप्यसमाधेयत्वात। प्रियशिरस्त्वादिकमेव खलु ब्रह्मप्रतिपत्तौ साधनं मन्यते। तत्र ब्रह्म यद्यानन्दमयः, यदि वा पुच्छं ब्रह्म, उभयथापि समान एव प्रियशिरस्त्वाद्यप्राप्तिविचारः, इति न तेनाधिकरणेन कोऽपि विशेषो मतान्तरे। सर्वथा स्वानन्दमयब्रह्मतावादो न क्षोदक्षमः, इति पुच्छब्रह्मतावाद एव समुचितः।

एतेन—प्रियशिरस्त्वादयो ब्रह्मसम्बन्धित्वेनानन्दवल्ल्यामुक्ताः, इत्यानन्दादीनामिव तस्य प्रसक्त्याम्, नानन्दादिवदेते वस्तुतो ब्रह्मधर्माः; तथासति ब्रह्मणः स्थूलत्वकृशत्वादिप्रसङ्गात्, अपितु ब्रह्मणः पुरुषविधत्वरूपणानुगुण्येन तदवयवत्वेन कल्पितप्रियादिषु शिरस्त्वादयोऽपि कल्पिता, इति ':न तेषां प्राप्तिप्रसक्तिः' इति प्राप्तिनिषेधः कर्तव्य इति स्वमते तत्सार्थक्यप्रकारवर्णनमपि—परास्तम् ।

अद्वैतमतेऽपि हि प्रियशिरस्त्वादयो पुच्छब्रह्मणो रूपणानुगुण्येनैव वर्णिताः, आनन्दवल्ल्यां च प्रतिपादिता इति हि समानमेव सर्वमपि । तथाच नाधिकरणान्तरपर्यालोचनयापि पुच्छब्रह्मवादाभिप्रायः सूत्रकाराणां वारयितुं शक्यते, प्रत्युत तत्रैव बहुतरश्रुतिपुराणाद्येकवाक्यतया पूर्वोक्तविधयाऽऽनन्दमयाधिकरणसार्थक्यस्यान्यथाऽसंभवाच्च सूत्रकाराणां हृदयमिति गम्यत इति सिद्धम् । तदिदं सर्वं मनसि निधायैव ब्रह्मविद्याभरणकाराः पुच्छब्रह्मवादं तत्तादृशग्रन्थान्तरानुक्तकारणविशेषाणामप्युल्लेखेन समर्थयन्ति । अत्र प्रसङ्गात् तदीयान्यपि वाक्यानि संगृह्यन्ते । तदयं संग्रहः—

( १ ) आनन्दमयादन्यस्य कस्यचिदन्तरस्यात्मन आम्नानाभवात् न तस्य सर्वान्तरत्वसिद्धिः; "तस्यैष एव शारीर आत्मा" इति तस्याप्यन्तरस्य निरूपणात् । तथाच तत्रैव सर्वान्तरत्वाकाशकारणत्वादिकमपि पर्यवसाययितुं शक्यते । अत एव मान्त्रवर्णिकत्वमपि तस्यैव ।

( २ ) वस्तुतस्तूपक्रमोक्तं गुहानिहितत्वं न ब्राह्मेण रूपेण, किन्तु जैवेन, इति तस्यानन्दमये पर्यवसानं तस्य जीवत्वमेव साधयेत् । तत्र परमव्योमशब्दस्य भृगुवल्ल्यां सप्रपंचं ब्रह्मस्वरूपं निरूप्य— "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति संगमनात् परमेश्वरपरत्वम्, इति परमव्योमाश्रितं गुहानिहितं रूपं

जैवमेवेत्यास्थेयम्। तथाचेदमेव जैवं रूपमानन्दमयपदेनोपस्थाप्यत इति युक्तं प्रतिपत्तुम्। अत्रापि "ब्रह्म पुच्छं प्रतिष्ठा"इति प्रतिष्ठात्वोक्त्याऽऽनन्दमयस्य ब्रह्माश्रितत्वोक्त्या तदेवेदमिति हि प्रत्यभिज्ञायते।

(३) बुद्ध्युपाधिको जीवो विज्ञानमयः, अज्ञानोपाधिकस्त्वानन्दमयः, इति विवक्षोपपत्तेर्विज्ञानमयाद् जीवादन्यत्वेन निर्देशादानन्दमयो ब्रह्मेति साधनमपि न घटते, "योऽयं विज्ञानमयः प्राणेषु" इति विज्ञानमयशब्दस्येव—"सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयः" इत्यानन्दमयशब्दोऽपि हि जीवपर एव दृश्यते। अत्र हि सुषुप्तलिङ्गाद् जीव एवानन्दमयः।

(४) आनन्दमयस्य ब्रह्मत्वाभ्युपगमे "ब्रह्म पुच्छ" मित्युक्तिस्वारस्यसिद्धं तस्याब्रह्मत्वं बाध्येत, तदपेक्ष्य "ब्रह्मविदाप्नोती"ति प्रकृतब्रह्मप्रत्यभिज्ञानात् ब्रह्मणः स्वप्राधान्यसिद्धये पुच्छपदप्रयोगावगतमप्राधान्यमेव बाधितुं युक्तम्।

(५) प्रकरणं चेदम्—"यतो वाचो निवर्तन्ते" इति वाक्यवशाद् निर्विशेषपरमित्युक्तार्थ एवाभ्युपगन्तव्यः, नानन्दमयप्राधान्यं तदुपासनं वा। अत्र वाच इत्यस्य मतान्तर एव संकोचो नाद्वैतमते। उपक्रमप्रतिज्ञातानन्त्योपपादकतया प्रवृत्तेन सृष्टिवाक्येन सृष्टितदुपयुक्तगुणप्रतिपादने वस्तुपरिच्छेदप्रसक्त्या सृष्टिवाक्यस्य स्वापवादवाक्यापेक्षणात् तदनुगुणापवादपरत्वमेव "यतो वाचः" इत्यस्य युक्तम्।

(६) "ब्रह्मविदाप्नोति परम्" इति वाक्ये आप्नोतिपदं भवत्यर्थकमेव; ब्रह्म वेद ब्रह्मैव भवती"तिश्रुत्यन्तरात, इति नोपक्रमो भेदपरः। अतः प्रकरणस्योपक्रमोपसंहाराभ्यां निर्विशेषपरत्वाध्यवसायात् अभ्यासाच्च पुच्छब्रह्मण एव प्राधान्यं स्वीकर्तव्यम्—इति।

**अत्रेदं परपक्षनिराकृतिकारा वदन्ति—**

"तस्यैष एव शारीर आत्मा" इत्यस्य पूर्वोक्तरीत्याऽद्वैताभिमतार्थसाधकत्वायोगः। पूर्वस्य=अन्नमयस्य जनक आत्मैव तस्य प्राणमयस्यापि जनक इति विवरणं तु घटस्य दण्ड इत्यादिप्रयोगाभावेन षष्ठ्या अन्यजनकभावेऽप्रयोगात् न संभवति; अन्यथा—पूर्वस्य=आनन्दमयस्य जनक एव तस्य पुच्छब्रह्मणोऽप्यात्मा, य एष इति पुच्छब्रह्मणोऽप्यन्तरात्मनिरूपणप्रसङ्गः। प्रमाणान्तरानुरोधेन ब्रह्मण आत्मान्तराभावे तु आनन्दमयस्यापि स समान एवेति।

**अयमत्राद्वैतिनां समाधानप्रकारः—यत् "तस्यैष एव शारीर आत्मा" इत्यस्य पुच्छब्रह्मवाद एवानुगुण्यं पूर्वोक्तरीत्यैव। सर्वकारणत्वादात्मनः कारणस्यैव तस्यात्रात्मपदेन परामर्शेन च देवदत्तस्य पितेत्यादाविव जन्यजनकभावेऽपि षष्ठ्युपपत्तिः। तस्यपदेनानन्दमयस्यैव ग्रहणम्, नतु पुच्छब्रह्मणः; तस्य-पूर्वस्यपदाभ्यां प्रक्रम्यमाणव्यतिरिक्तयोः पूर्वतनयोरेव पर्यायान्तरेषु विवक्षणात्। तथाच—पूर्वस्य विज्ञानमयस्य जनक एवायमात्मा पुच्छब्रह्मपदबोध्यः आनन्दमयस्यापि जनक इत्येवार्थो विवक्षणीय इति न पुच्छब्रह्मणोऽपि जनकस्यात्मान्तरस्यात्रोपदेशप्रसङ्गः। तथाच—तस्यैष आत्मा यः पूर्वस्येति वाक्यान्यथानुपपत्तिरानन्दमयाब्रह्मतायां प्रथमं निमित्तमिति ब्रह्मविद्याभरणोक्तं साधीय एव।**

ब्रह्मणो जीवब्रह्मात्मकरूपद्वये प्रमाणाभावः, उपक्रमे वेदनकर्तृत्वेन प्रस्तुतस्य तस्य तत्कर्मत्वायोगः, अत एव—"यो वेद" इति तस्मिन्नेव वाक्ये जीवस्य कर्तृत्वेन परामर्श उपपद्यते। परमव्योमपदस्य ब्रह्मपरत्वमपि न कुत्रापि दृश्यते। अत्र प्रकरणेऽपि—"परमे व्योमन्" इत्यस्य हृदयाकाशपरत्वमेव शङ्करभगवत्पादा अपि मन्यन्ते। अस्तु वा भार्गवविद्यायां परमे-व्योमन्पदयोः ब्रह्मपरत्वम्, प्रकृतेतु—परमे व्योमन्नित्यस्य नोक्तार्थपरत्वम्। अन्यथा—अनेन वाक्येन ब्रह्मणो जीवाश्रयत्वे प्रतिपादिते, "विज्ञानमयादन्योऽन्तर आत्मा" इत्यत्रापि विज्ञानमयपदवाच्यजीवाश्रय-

त्वमानन्दमयस्य प्रतीयते, इति प्रत्यभिज्ञाबलादानन्दमयस्य ब्रह्मत्वमेव सिद्ध्येत्, न जीवत्वम्। विज्ञानमयपदं हि बहुषु श्रुतिषु जीवे प्रयुज्यत इति तस्य न जीवपरत्वमिति वादो न योग्यः। स च जीवो न बुद्ध्युपाधिक इत्यन्यदेतत्। आनन्दपदस्याज्ञानरूपोपाधिपरत्वं तु परिहसनीयमेव। आनन्दमयपदं तु—"आनन्दमयो ह्यानन्दभुक्" इत्यत्रापि परमात्मपरमेव; "एष सर्वेश्वरः"ति वाक्यशेषात्, सुषुप्तिसंम्बन्धस्तु आनन्दमयस्य परमात्मन एव जीवाभेदाप्रायेणेति संभवात्। "आनन्दं ब्रह्मणः" इत्यादिवाक्यानुसारेणानन्दसम्बन्धस्य ब्रह्मण्येवावगमेनानन्दमयशब्देन ब्रह्मण एवोपस्थितेश्च। तथाच विज्ञानमयाद् भेदकथनमानन्दमयस्य जीवातिरिक्तत्वं साधयत्येवेति तु तेषां द्वितीययुक्तिनिरासप्रकारः।

अद्वैतिनां स्वपक्षसाधनप्रकारस्त्वयमेव—"तच्च सर्वमिदं विश्वं जगदेतच्चराचरम्। परमब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम्। विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा"। इति विष्णुपुराणषष्ठांशसप्तमाध्यायवचनं हि परमात्मनो जैव-ब्राह्मरूपद्वये प्रमाणम्। "ब्रह्मविदि"ति वेदनकर्तृत्वेन प्रस्तुतस्तु विशिष्टरूपः, कर्मत्वेन निर्दिष्टस्तु तुरीयरूपः। तस्यापि हि गुहानिहितत्वं विशिष्टस्य जीवस्यापि गुहापदार्थत्वस्यैव तैत्तिरीयश्रुतौ विवक्षणात् न विरुद्धम्। तथाच संसारी जीवः स्वस्यासंसारिरूपं जानन् मुक्तो भवतीति वाक्यार्थः। सति चैवमानन्दमयस्यापि जीवत्वमभिप्रेत्यैव—"परमे व्योमन् प्रतिष्ठिते"ति वाक्यम्। अत्र 'परमे व्योमन्' इत्यस्यैव ब्रह्मपरत्वं भवतु, अथवा परमपदस्य; सर्वथातु अद्वैतानन्दरूपे प्रतिष्ठा तु भगवत्पादसम्मतेति तु न विप्रतिपन्नमिदम्। तथाच—"यो वेद निहितं गुहायाम्" इति जीवाश्रयत्वं ब्रह्मणो बोधनीयमेव। सत्यप्येवं यथाऽऽन्नमयगुहात्वे तदन्तरस्य तदाश्रयत्वम्, एवं विज्ञानमयान्तरस्यानन्दमयस्यापि तदाश्रयत्वं तु सिद्धमेव। एवमपि—प्राणमयादीनामिव नानन्दमयस्यापि परमात्म-

त्वम्। न ह्यद्वैतिनोऽपि प्राणमय-मनोमय-विज्ञानमयान् स्वप्नावस्थं जीवं मन्वाना विज्ञानमयजीवत्वे विवदन्ते। नहि तावताऽऽनन्द-मयपरमात्मत्वं सिद्ध्यति; तस्य विज्ञानमयजीवव्यतिरिक्तस्यैव सौषुप्तजीवत्वस्य तैः स्वीकारात्। न ह्यद्वैतिनो गुहानिहितमित्यत्र जैवरूपेणेत्यध्याहारं मन्यन्ते; तस्य वस्तुस्थितिप्रदर्शनमात्रपरत्वात्। अत्र पूर्वोदाहृतपैङ्गलोपनिषद्वाक्यानुसारेणान्नमयादिशब्दानां कोश-परत्वमेव साक्षात्, आत्मपदसामानाधिकरण्यात्तु तदुपहितस्यापि तेन पदेन व्यवहार इति व्यक्तम्। अधिकं वेदान्तसारादौ द्रष्ट-व्यम्। तथाच—आनन्दमयपदस्यैवाज्ञानपरत्वम्, तदुपहितत्वात्तु सौषुप्तजीवस्याप्यात्मपदसामानाधिकरण्येन। तथाच—आनन्दपद-स्याज्ञानपरत्वं नाद्वैतिनो मन्यन्ते, इति के वात्रोपहसनीया इति भवन्त एव विभावयन्तु। न ह्यद्वैतिनोऽन्नादिविकारत्वं जीवस्य स्वीकुर्वन्ति, इति विकारार्थकत्वं मयटो न जीवत्वव्यवस्थापनाय, किन्तु तदुपाधिविशेषनिर्धारणायैव। उपाध्युपहितयोस्तादात्म्यात्तु तत्पदेन व्यवहारः—यथा 'देवदत्तोऽहं जानामी'त्यादौ। घटाकाश-योस्तु न तादात्म्यम्, इति न घटपदेनाकाशग्रहणापत्तिः। तथाच गुहास्वरूपनिरूपणं मयडन्तेन पदेन विज्ञानमयपर्यन्तेन वाक्येन यदा विवक्ष्यते, तदाऽऽनन्दमयपदमात्रे मयडन्ते कथं न गुहास्वरूपपर-त्वम्? तथाच—मयडर्थो विकारो वा प्राचुर्यं वेति विचारस्यैव नात्र प्रसङ्ग इति तु वस्तुस्थितिः। न्यायरक्षामण्यादौ भाष्यादौ च तत्रापि जीवपरत्वादिव्यवस्थापनं तु अभ्युपगमवादेनैव। "आनन्द-मयो ह्यानन्दभुक्" इत्यत्राप्यानन्दमयशब्दस्य जीवपरत्वमेव। "एष सर्वेश्वरः" इति तदभेदाभिप्रायेणैव। नहि जीवधर्मेण पर-मात्मनो व्यवहारः, इति हि "भोक्त्रापत्तेरि"त्यादौ व्यक्तम्। अतः सुषुप्तसम्बन्धो मतान्तरे न कथमपि संभवति; अन्यथा—परमा-

त्मन एव तृतीयपादत्वमपि स्वीकर्तव्यं स्यादिति तुरीयपादोऽनिरूपित एव स्यात्, इति व्यष्टिरूपेण समष्टिरूपेण च जीव एव तृतीयपाद इत्यवश्यमूरीकर्तव्यम्। एतेन—प्राज्ञशब्दस्य परमात्मन्येव—"प्राज्ञवत्" इत्यादिस्थले विवक्षेति—परास्तम्। यथाच ज्ञप्तिमात्रस्य जीवस्य प्राज्ञत्वेन व्यपदेशः, तथाऽन्यत्र व्यक्तम्

एतेन—"उपक्रमानुसारेण हि सापेक्षोपसंहारस्यानन्यथा नयनम्, न तूपसंहारानुसारेणोपक्रमस्य, येन—सुषुप्तेर्जीवद्वाराऽन्वयोपगमे बाधकाभाव इति—परास्तम्; आनन्द एव हि ब्रह्म, नानन्दमयम्; "आनन्दो ब्रह्मेति व्यजानात्" इति गुरुशिष्यसंवादादिना प्रवृत्तेऽज्ञातार्थबोधनेनोपदेशरूपे विधिकल्पे च वाक्ये लक्षणाया "न विधौ परः शब्दार्थः" इति न्यायेनान्याय्यत्वात्। एतेन—"आनन्दं ब्रह्मणो विद्वानि"ति वाक्यमपि व्याख्यातम्; विद्वान्-पर्यन्तस्यानुवादत्वेनाभेदषष्ठ्यैव तस्य नेयत्वात्। एतेन—उपक्रमानुसारेण न सर्वेश्वरादिपदस्वरसार्थस्त्यक्तुं योग्य इत्यादि—परास्तम्; "एष सर्वेश्वरः" इति प्रतिपादितसर्वेश्वरतादात्म्यस्याद्वैतमते आनन्दमयपदेन जीवविवक्षायामप्यबाधेनान्यार्थकल्पनाभावात्।

यदि तु—"एष सर्वेश्वरः" इत्यादिवाक्यशेषवशात् उपक्रमविरोधेनापि माण्डूक्योक्त आनन्दमयः परमात्मैवेति मन्यते, तर्हि तुल्ययुक्त्या तैत्तिरीयोपनिषद्यपि "तस्यैष एव शारीर आत्मे"-त्यादिवाक्यशेषवशेन परमात्मनोऽतिरिक्त आनन्दमयो न ब्रह्म भवितुमर्हति। यथाच—"तस्यैष एवे"तिवाक्यस्य भवदभिमतार्थानां सर्वेषामानन्दमयब्रह्मतासाधकानां न प्रसङ्गः, तथा पूर्वमेव विवेचितम्। एतेन—तद्वाक्ययोजनाविषये संभावितानां पक्षाणामेकस्यापि नाद्वैताभिमतार्थसार्थकत्वसंभव इति—दत्तोत्तरम्।

अभ्युपगम्य—"एष सर्वेश्वरः" इति वाक्यस्यानन्दमयपरत्वमानन्दमयस्य तैत्तरीयगतस्य जीवत्वं व्यवस्थापितम्। वस्तुतस्तु—"एष सर्वेश्वरः" इत्यस्य नानन्दमयविषयत्वम्, तस्य "नान्तःप्रज्ञमि" त्युत्तरवाक्येनैवान्वयेन चतुर्थपादरूपपरमात्मपरत्वात्। नहि परमात्मा तृतीयः पादः; प्रथमद्वितीययोर्जागरितस्वप्नावस्थागतयोरिव सुषुप्तावस्थागतस्यापि जीवत्वस्यैवोचितत्वात् 'त्रिकालातीतमि'त्यवस्थात्रयातीतं हि ब्रह्मरूपेणोपक्रम उपन्यस्तम्, अन्यथा तृतीयपादस्यापि ब्रह्मत्वे कस्य तुरीयपादत्वमिति त एव नाम विभावयन्तु? सर्वथातु—माण्डूक्यगतोऽप्यानन्दमयः सुषुप्तावस्थापन्नो जीव एव।

अथवा—"नान्तःप्रज्ञं न बहिःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमि" ति परमात्मनो विश्वादिभेद इव प्रज्ञानघनभेदोऽपि प्रतिपादित उपपद्यते। एतेन—प्रज्ञानघनत्व-प्राज्ञत्वयोः "यस्सर्वज्ञः सर्ववित्" इत्येत्रेवापुनरुक्तिरिति—व्याख्यातम्; एवं सति हि—न प्रज्ञानघनम्, इत्यनेन न प्राज्ञ इत्यप्युक्तप्रायमिति ज्ञेयं ब्रह्म न तृतीयपादगतेन प्रज्ञानघनशब्देन प्राज्ञशब्देन वा मन्यते, इत्यगत्या भवद्भिरपि वक्तव्यम्। सति चैवम्—कथं वाऽऽनन्दमयः प्राज्ञशब्देनोल्लिखितोऽपि परमात्मा स्यात्? अद्वैतमतेतु जागरितस्थाकस्य जीवस्य वैश्वानरत्वोल्लेखेन—व्यष्टि-समष्टिभावेनैव जीवेश्वरव्यवहारात् तृतीयपादस्यापि समष्टिभावेनेश्वरत्वप्रतिपादनार्थं प्राज्ञपदमीश्वरपदमपि वा न दोषाय; समष्टिरूपेणेश्वराभेदसूचनार्थत्वाद् तन्निर्देशस्य। सति चैवम्—"एष सर्वेश्वरः" इत्यनेनापि समष्टिभावेनास्यैवानन्दमयस्य सर्वकारणत्वमिति विवेचनपूर्वकं तुरीयं स्वरूपं सगुणेश्वरातीतं निर्विशेषमेव पारमार्थिकं माण्डूक्योपनिषत्प्रतिपाद्यमवगम्यते। तथाच—तैत्तरीयोपनिषद्यपि—यद्यन्नमयादिशब्देन व्यष्टिसमष्ट्युभयस्वरूपविवक्षा गृह्यते, तर्ह्यानन्द-

मयशब्देन व्यष्टितादात्म्यापन्नसमष्टिस्वरूपेश्वरविवक्षापि न दोषाय। सत्यप्येवं प्राधान्येन प्रतिपाद्यं माण्डूक्ये तुरीयपाद इवात्रापि पुच्छं ब्रह्मैव, नानन्दमय इत्यगत्या स्वीकरणीयम्। एतेन—"प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेदे"त्यादि वाक्यमपि—व्याख्यातम्; तस्यापि समष्टिस्वरूपाभेदाभिप्रायेण प्रवृत्तत्वात्। तथाच—"प्राज्ञवत्" इति परमात्माभिप्रायेण प्राज्ञशब्दोऽपि न विरुद्धः।

इदमेवात्रालोचनीयम्—यत् प्राज्ञशब्देन तत्र प्रतिपाद्यमानः परमात्मा किं कार्यकारणभावातीतं निर्विशेषम्, उत सविशेषम्? यदि सविशेषमेव, तर्हि ततोऽप्यन्यस्य तुरीयपादस्य ब्रह्मणो माण्डूक्योपनिषदि प्रतिपादनात् तस्य प्राधान्यं तु बाधितमेव। निर्विशेषवादस्तु मतान्तरानभिमतत्वात् न तेषां संस्पर्शमप्यर्हतीति, न प्रथमपक्षं गृहीत्वा बहु वर्णनं सांप्रतम्।

सति चैवमानन्दमयपदस्य व्यष्ट्यभिप्रायेण यत्र प्रवृत्तिस्तत्र-मयटो विकारार्थत्वम्, समष्ट्यभिप्रायेणोभयाभिप्रायेण च यत्र प्रवृत्तिः—तत्र मयटः प्रचुर्यार्थकत्वम्, इति तैत्तरीयोपनिषदोऽपि व्यष्ट्यभिप्रायेण प्रवृत्तिमादाय विकारार्थत्वम्, उभयाभिप्रायेण प्रवृमादाय प्राचुर्यार्थकत्वं च मयटो नानुपपन्नम्। अत एव भाष्यकारा अपि पक्षद्वयमपि स्वीकृत्यानन्दमयाप्राधान्यमेव स्थापयन्ति, नतु तस्य प्रधानपरमात्मत्वपीति प्रधानं ब्रह्म नानन्दमयप्रतिपाद्यतया कुत्रापि दृश्यते; माण्डूक्योपनिषद्यप्यप्रधानस्यैवानन्दमयस्य प्रतितिपादनादित्युक्तिः कथमपि न बाधिता। तथाच प्राचुर्यार्थकत्वं मयटोऽद्वैतमतानुयायिभिः स्वीकृतं नानन्दमयप्राधान्यव्यवस्थापकं भवति। इदमेवाद्वैतिनां मतम्—यत् आनन्दप्रचुरोऽप्यानन्दमयो न समष्टि-व्यष्टिजीवातिरिक्तं प्रधानं ब्रह्मेति।

एतेन—मयटः प्राचुर्यार्थत्वमानन्दमयस्य जीवत्वं निवारयति, सुतरां सुषुप्तजीवस्य बाह्यान्तरसर्वपदार्थविषयकज्ञानाभावस्य तत्र तत्र श्रवणेन ज्ञानविशेषात्मकानन्दवत्त्वस्यैव दुर्लभतया तत्प्राचुर्यकताया दूरनिरस्तत्वात्, आत्मस्वरूपवत् धर्मभूतं ज्ञानं तस्यां दशायां वर्तत इत्यन्यदेतत्। तादृशं तदादायानन्दप्राचुर्यव्यवहारोपपत्तेस्संपादयितुमशक्यत्वादित्यादि—परास्तम ; सुषुप्त्यवस्थायां जीवस्य वैषयिकानन्दज्ञानाभावमात्रे श्रुतीनां तात्पर्येण स्वरूपानन्दप्रकाशस्याबाधेन चानन्दप्रकाशस्य स्वीकरणीयत्वात्।

अत एव 'सुखमहमस्वाप्समि'ति प्रत्यभिज्ञोपपत्तिः। ज्ञानविशेष एवानन्द इति तु मतान्तराभिमता स्वकपोलकल्पना न प्रमाणपदवीमध्यास्ते। एतेन—धर्मभूतज्ञानकथापि—व्याख्याता। धर्मभूतं ज्ञानमात्मस्वरूपं नित्यं च संकोचविकासशालि चेति खलु भवतां मतम्। संकोचविकासशालित्वं नित्यत्वं च यदि न व्याहतम्, तर्हि किं जैनेनापराद्धम्? सति चैवम्—"एवं चात्माकार्त्स्न्यम्" इति सौत्रन्यायविरोधो न कथं भवति? आत्मस्वरूपत्वं धर्मत्वं चेत्यपि कथं न व्याहतम्? नहि स एव तद्धर्मो भवति। किञ्च धर्मभूतज्ञानमिदं संकुचितस्वभावं वा? विकसितस्वभावं वोभयस्वभावं वा? अनुभयस्वभावं वा? आद्ये मुक्त्यनुपपत्तिः, द्वितीये संसारानुपपत्तिः? तृतीये संकोचविकासौ किं सनिमित्तौ, उत निर्निमित्तौ? आद्ये ईश्वरानन्दानुभवस्यापि सनिमित्तत्वापत्तिः, अन्त्ये बन्ध-मोक्षसांकर्यापत्तिः। अनुभयस्वरूपत्वे तु धर्मभूतज्ञानं संकोचविकसाशालि चेति व्याहतम्। अथ यदि प्राज्ञसंपरिष्वङ्गे ज्ञानविकासः, बाह्यसंपरिष्वङ्गे तत्संकोच इति मन्यते, तर्हि सुषुप्तजीवेन किमपराद्धम्? यः प्राज्ञसंपरिष्वक्तोऽपि न विकसितज्ञानी, न वाऽनन्दमयः, इति रिक्तमिदं सर्वं वचः॥

तदिदं सिद्धम्—यत् सुषुप्तिदशायां प्राज्ञभावापन्नो जीवः

प्राज्ञरूपेणैव पश्यति, नतु जागरितस्वप्नावस्थयोरिव स्वीयजीवत्वविशिष्टरूपेणेति हि परमार्थगतिः। अत एव—"सलिल एको द्रष्टे"ति जीवस्य सुषुप्त्यवस्थायां द्रष्टत्वनिर्देशोऽप्युपपद्यते।

एतेन—सुषुप्त्यवस्थायां द्रष्टेति जीवस्य ज्ञानाश्रयत्वव्यपदेशादपि न पराभिमतो ब्रह्मभावः सुषुप्त्यामुपपद्यत इति—परास्तम्; कारणशरीराज्ञानोपहितरूपेण जीवस्य सुषुप्त्यवस्थायामपि सत्त्वेन समष्ट्यज्ञानोपहितब्रह्मभावेऽपि जीवत्वानपायेनोक्तदोषाप्रसरात्।

अतश्च माण्डूक्योपवर्णित आनन्दमयोऽपि यदि वा जीवः, यदिवा समष्ट्यभिप्रायेणेश्वरः, यदि वा विकारार्थे मयट्, यदि वा प्राचुर्यार्थे मयट्, सर्वथातु न प्रधानं ब्रह्म; तुरीयस्यैव तत्र प्रधानत्वात्, इति तदेकवाक्यतैव तैत्तरीयश्रुतावपि भवन्मतरीत्यापि यदि विवक्ष्यते, तदा तैत्तरीयोपनिषत्प्रतिपाद्योऽप्यानन्दमयोऽप्रधानं ब्रह्म, यो व्यष्ट्यभिप्रायेण जीवः, समष्ट्यभिप्रायेणेश्वरो वा; पुच्छमेव तु ब्रह्म तुरीयमानन्दमयाधिष्ठानम्—"ब्रह्मविदाप्नोति परम्" इति ज्ञेयत्वेन प्राप्यत्वेन च विवक्षितमिति सिद्धम्। इदमेवाभिप्रेत्योक्तं वेदान्तसारे—यदन्नमयो जागरिको जीवः, प्राणमय-मनोमय-विज्ञानमयास्संमिलिताः स्वप्नावस्थापन्नो जीवः, आनन्दमयस्तु सुषुप्त्यवस्थापन्नो जीव इति। सति चैवं माण्डूक्यतैत्तरीययोरेकवाक्यताऽद्वैतमतेऽपि न विरुद्धा।

एतेन—माण्डूक्यानन्दमयपदे प्राचुर्यार्थकत्वं वदता तैत्तरीयेऽपि तस्य तदर्थकत्वसिद्ध्याविष्कारेणानन्दमयाधिकरणसूत्रार्थान्यथाकरणाद्यास्पदः सर्वोऽप्यद्वैतिनां कलहस्तट्टीकाकारैरेव शान्तिं नीत इति—व्याख्यातम्; उक्तरीत्याऽऽनन्दमयाप्राधान्याभिप्रायस्यैव सर्वैरपि स्फुटीकरणात्।

ब्रह्मानन्दप्राचुर्यं जीवव्यावृत्तम्; आनन्दमीमांसया मनुष्यमारभ्य हिरण्यगर्भाख्यादिजीवपर्यन्तमानन्दप्राचुर्यस्य मीमांस-

नात्, इति कथं वाऽऽनन्दमय इति मयटः प्राचुर्यार्थत्वमप्यानन्दमयजीवताविरोधि ? नहि विज्ञानमयेनैवाप्रधानब्रह्मजीवप्रकरणं समाप्तम्। तेन बुद्ध्युपाधिकस्यैव विवक्षणेन सौषुप्तजीवपरत्वाभावात्, सौषुप्तजीवेनैव हि जीवस्वरूपं समाप्यते, नतु स्वाप्नेन जीवेन; अन्यथा सुषुप्तेर्मरणादविशेषापत्तेः।

इदमेवाभिप्रेत्योक्तं ब्रह्मविद्याभरणे—बुद्धेस्तदुपाधिकजीवविकारत्वात् विज्ञानमयो बुद्ध्युपाधिको जीव इति। यदा त्वन्नमयादिशब्दानां शरीरमात्रपरत्वम्, तदातु विज्ञानमयशब्देनाधिदैविकविज्ञानकार्या बुद्धिरेव विवक्ष्यते, नतु तदुपाधिको जीवोऽपीत्यपि ब्रह्मविद्याभरणोक्तं साधीय एव। विज्ञानशब्दस्य "यो विज्ञाने तिष्ठन्नित्या"दौ जीवेऽपि प्रयोगदर्शनेन जीवाधिष्ठताया बुद्धेरपि जीवकार्यत्वाभिप्रायेण विज्ञानमयशब्देन व्यवहारे बाधकाभावात्। जीवाधिष्ठानत्वं हि जीवस्वरूपचैतन्याधिष्ठानत्वमेव, नतु विशिष्टजीवाधिष्ठानत्वम्; कार्याणां कारणरूपेण निर्दिष्टानां कारणात्मताया एव विवक्षणौचित्यस्य पूर्वमेव विवेचितत्वात्। अत एव हेमकार्यमपि कटकं कुण्डलात् कटकमिति व्यवह्रियते। तथाच—यथा कुण्डलमयं कटकमिति न व्यवहारः, एवं जीवमयी बुद्धिरिति न व्यवहारः, किन्तु विज्ञानमय इत्येव व्यवहारः। तथाच स्वप्रकाशं चैतन्यमात्ररूपं ज्ञानमेवाधिदैविकविज्ञानशब्दार्थः, अन्नमयाद्यधिष्ठानं तु सद्रूपमात्रेण ज्ञातं ब्रह्मैव; तेषां भानंतु बुद्धितादात्म्याधीनमेव, नतु चैतन्यमात्राध्यासात्, अत एव घटादीनां न सदा प्रत्यक्षम्, बुद्धिस्तु सदा प्रत्यक्षेति व्यवहारः।

एतेन—विज्ञानद्वैविध्यस्य तयोर्विकार-विकारिभावस्य च भवत्सङ्केतमात्रत्वात् उपेक्षणीयत्वमिति—परास्तम्; "सत्यं ज्ञानमि"ति प्रतिपादितब्रह्मरूपज्ञानातिरेकेण बुद्धेः सर्वसम्मतत्वात्"

यथाच "यतो वाचो निवर्तन्ते" इत्यस्य पर्यायद्वयगतस्यापि वाङ्मनसयोर्ब्रह्मरूपानन्दपर्यन्तं प्रवृत्तिः, न ततोऽधिकमिति निर्विशेषब्रह्मणोऽवाङ्मनसगोचरतायामेव तात्पर्यम्, तथा पूर्वमेव विवेचितम्।

एतेन—मनोमयपर्यायो न निर्विशेषपरः; तदनन्तरम्—"अन्योऽन्तर आत्मा विज्ञानमयः" "आनन्दमयः" "सोऽकाममते"त्यादि बहुविधविशेषप्रतिपादनविरोधादित्यादि—परास्तम्; मनोमयपर्यायगतस्य तस्य वाङ्मनसयोस्तावत्पर्यन्तं प्रवृत्त्यैव स्तुतिसिद्धौ मनोमयब्रह्मप्राधान्यवादे ततोऽन्यस्य निरूपणान्यथानुपपत्त्या तात्पर्यकल्पानायोगेन तस्य निर्विशेषपरत्वानङ्गीकारात्। ब्रह्मणो वाङ्मनसागोचरत्वांशमादायतस्यापि मनोमयस्तुतिप्रसङ्गेन निर्विशेषपरत्वं प्रतीयमानं तु विवक्ष्यते चेदपि न विरुद्धमिति तु वस्तुस्थितिः।

सति चैवं "ब्रह्मविदाप्नोति परम्" इतिवाक्यमपि—"ब्रह्म वेद ब्रह्मैव भवती"ति वाक्यैकवाक्यतया तद्ब्रह्माभेदनिरूपणपरमेव, नतु तद्भेदपरम्। "आप्नोति परमि"ति तु व्यवहारदृष्ट्या, 'ब्रह्मैव भवती'ति तु परमार्थगत्या। अत एव—"ब्रह्मविदाप्नोती"त्यनन्तरं शरीरादिपरम्परयात्मोपदेशः, "ब्रह्म वेद ब्रह्मैव भवती"त्यनन्तरं तु न तथोपदेशः।

एतेन—"ब्रह्म वेद ब्रह्मैव भवती"त्यत्रैव भवतेः प्राप्त्यर्थकत्वं कुतो न स्यादिति शङ्कापि—परास्ता; आत्मनेपदस्यैव भवतेः प्राप्त्यर्थकत्वाच्च।

"तस्मिन्नेव यजमानास्सर्वे सैन्धवघना इव लीयन्त्येषा वै ब्रह्मैकता नामे"ति मैत्रायणश्रुतिरप्यत्र एवोपपद्यते। नहि जीवस्य लयो नाम मतान्तरप्रसिद्धः; तस्य सत्यत्वात्, कारणात्मता हि लयो नाम। तथाच ब्रह्मणोऽपि जीवोपादानकारणत्वं विना न तत्र तस्य लयः प्रतिपादयितुं शक्यते। उपादानत्वं च तस्य तद्व्यतिरेकेणाभावोपपादकं विवर्तोपादानत्वमेव; तदानीमेवैकतायाः सिद्धेः।

तथाच—न कथमपि जीवब्रह्मभेदे पारमार्थिके "तैत्तरीयोपनिषत् प्रमाणम्, किन्तु आकाशादिजीवान्तस्य, किं बहुना ? सर्वस्य प्रपञ्चस्य यद्व्यतिरेकेणाभावस्तादृशाधिष्ठानभूतपुच्छब्रह्मण्येव सा प्रमाणम्, यदेव हि—"जन्माद्यस्य यतः" इति सूत्रेण "भृगुर्वै वारुणिरि"त्यारभ्य "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठते"त्यन्तं प्रवृत्तभृगुवल्लीप्रतिपाद्यतया व्यवस्थापितम्। भृगुवल्ली-ब्रह्मवल्ल्योश्च कारणमुखेन कार्यमुखेन च ब्रह्मस्वरूपनिर्धारणार्थं प्रवृत्तयोरेकार्थत्वस्यैव युक्तत्वात् ब्रह्मवल्ल्या अपि तादृशाखण्डनिर्विशेषात्मस्वरूप एव पर्यवसानम्, इति निरूपणार्थमेव खल्वानन्दमयाधिकरणप्रवृत्तिः। सति चैवमानन्दमयाधिकरणेनाप्यानन्दमयस्यापि कारणरूपानन्दरूपपुच्छब्रह्मप्राधान्य एव स्वारस्यमित्यवचनसिद्धमिदम्। अतोऽत्रानन्दमयाधिकरणशरीरं ब्रह्मविद्याभरणोक्तमेव साधु, न मतान्तराभिमतम्।

अयमत्र ब्रह्मविद्याभरणोक्तः संशयाकारः—किं "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यमवयवतयाऽप्राधान्येन ब्रह्मोपस्थापकं प्रायपाठानुसारेण ? उतोपक्रमोपसंहारावगतप्राधान्यकस्य ब्रह्मणो ब्रह्मपदेन प्रत्यभिज्ञानात् स्वप्राधान्येनैव तत्प्रतिपादयतीति। प्रायपाठानुगृहीता पुच्छशब्दश्रुतिः, अभ्याससहिता ब्रह्मशब्दश्रुतिश्च संशायकसामग्रीति तु निष्कर्षः। आद्ये पुच्छपदस्य मुख्यार्थत्वम्, ब्रह्मपदस्य त्वानन्दमयभिन्नब्रह्माकारमात्रसमर्पकत्वाद् गौणत्वम्, द्वितीये तस्य गौणार्थत्वम्, ब्रह्मपदं तु मुख्यार्थमिति पर्यवसितार्थः। तत्र च यस्य स्वतन्त्रतया वाक्यशेषेऽभ्यासः, तस्य मुख्यार्थत्वम्, यस्य तु न, तस्य गौणार्थत्वमिति हि व्यवस्था न्यायवित्सम्मता। तथाच वाक्यशेषे ब्रह्मशब्दाभ्यासात् पुच्छशब्दप्रायपाठोऽकिञ्चित्कर इति निरूपणार्थमानन्दमयोऽभ्यासादिति सूत्रं प्रवृत्तम्, इति प्रथमसूत्र-

निरस्यः पूर्वपक्षः पुच्छब्रह्माप्राधान्यपक्षः, तत्समर्थनीयः सिद्धान्तस्तु पुच्छब्रह्मप्राधान्यपक्षः, इति पूर्वपक्ष-सिद्धान्तावपि सूचितप्रायौ।

एतेन—पुच्छत्वेन निरूपितस्यान्नमयादिष्विवावयवत्वेनाप्राधान्यस्य मनसि गाढलग्नतया तद्बाधकादर्शनेन संशयानुदयः, अस्याभ्यासहेतुना निवृत्त्यसंभवश्च; अभ्यस्यमानत्वहेतोरन्नमयादौ ब्रह्मदृष्ट्योपासनाविधायके वाक्येऽपि सत्त्वादित्यादि—परास्तम्; श्रुतिद्वयविरोधे प्रायपाठ-वाक्यशेषयोरपि प्राबल्य-दौर्बल्यानिर्णये च संशयोदयसंभवात्, प्रायपाठ-वाक्यशेषयोर्वाक्यशेषस्यैव प्राबल्येनाभ्यासेन पुच्छब्रह्मप्राधान्यस्यैव युक्तत्वात्, अन्नमयादिपर्यायेषु—"असन्नेव स भवती"त्यादाविव स्वतन्त्रतया ब्रह्मशब्दादर्शनेन तत्र व्यभिचाराभावाच्च।

अयमत्रानुमानप्रयोगः—ब्रह्मपुच्छमित्यानन्दमयपर्यायगतं वाक्यम्, तदर्थब्रह्मप्रधानम्, अभ्यस्यमानस्वघटक-ब्रह्मशब्दघटित-वाक्यशेषवत्त्वात्, यत् अभ्यस्यमानयद्घटकशब्दघटितवाक्यशेष-वत्, तत तदर्थप्रधानम्, यथा तत्त्वमसिवाक्यम्। अन्नमयादि-पर्यायवाक्यशेषेषु न ब्रह्मशब्दस्यान्नमयादिवाक्ये प्रयोगो न वाभ्यासः। "असन्नेव स भवती"ति वाक्येतु यो ब्रह्मशब्दोऽभ्यस्यते, स पुच्छवाक्येऽपि वर्तत इति न कोऽपि विरोधः। एतेन—"स यो नाम ब्रह्मोपास्ते" इत्याद्यपि—व्याख्यातम्, तत्रापि ब्रह्मशब्दाभ्यासस्योक्तविधस्याभावात्, पुच्छब्रह्म, प्रधानम्, वाक्यशेषेऽभ्यस्यमानत्वादिति यथाश्रुतार्थविवक्षापि पुच्छब्रह्मपक्षकत्वे न विरुद्धा। वाक्यशेषे इति पूरणं तु—'आकाशस्तल्लिङ्गात', 'अन्तस्तद्धर्मोपदेशात्' इत्यादिषु सर्वत्र समानम्।

अत्रान्नमयाद्यप्राधान्यस्यान्यस्य निरूपणेनैव ज्ञातत्वात् अन्नमयाद्यन्यत्वे सतीति हेतुविशेषणात् नान्नमयादौ व्यभिचारः। तथाचानन्दमय इति पदमन्नमयाद्युपलक्षणार्थमपीति मन्तव्यम्। तथाच—"ब्रह्मपुच्छमभ्यासादि"ति सूत्रणाभावे निमित्तान्तरमपि सूचितम्।

एतेन—अभ्यासादित्यस्याभ्यासावगतप्राधान्यकब्रह्मप्रत्यभिज्ञान-परतायाः विलक्षणसाध्यवाचकपदाध्याहारस्य आनन्दमयपदलक्षणायाश्चान्याय्यत्वात् सूत्रार्थवर्णनमपि श्रोतृश्रवणारुन्तुदमिति—परास्तम्; अभ्यासावगतप्राधान्यकब्रह्मण एवात्र प्रतिज्ञानादिति हि फलितार्थकथन-परम्, न त्वभ्यासपदार्थविवरणम्।

आनन्दमयपदवाच्यः प्रधानः परमात्मा, वाक्यशेषे शतगुणोत्तरतयाऽभ्यस्यमानावाङ्मनसगोचरानन्दाश्रयत्वादिति मतान्तरविवरणेऽभ्यासपदस्य यथाश्रुतार्थत्यागेनार्थान्तरपरत्ववत् नात्रार्थान्तरपरत्वम्, किन्तु वाक्यशेषेऽभ्यस्यमानत्वमेव विवक्ष्यते, इति वाक्यशेष इत्यस्याध्याहारस्य सर्वमतसाधारण्येन सम्मतत्वात् नाध्याहारदोषो मतान्तर इव।

एतेन साध्यांशोऽपि व्याख्यातः; अर्थपक्षकत्वेऽद्वैतमतेऽपि प्रधानः परमात्मेत्यस्यैव विवक्षणे बाधकाभावात्। आनन्दमयपदस्य पुच्छब्रह्मलक्षकत्वं तु यद्यप्यद्वैतमते भवति, तथापि तस्य कार्यान्तरोपयोगस्य पूर्वमुक्तत्वात् न स दोषः। अभ्यासपदस्य प्राधान्यसाधनसमर्थस्य ब्रह्मत्वसाधनत्वायोगात् अप्रयोजकत्वं भवन्मते, अवाङ्मनसगोचरत्वेनाभ्यस्यमानेत्यादि तु स्वकपोलकल्पनम्, सूत्राक्षरानवगतमिति सौत्रहेत्वाऽऽस्यं न मतान्तरे। अभ्यस्यमानो ह्यानन्दो नावाङ्मनसगोचरः, नवा धर्मभूतः, किन्तु पुच्छं ब्रह्मैव, इति हेत्वसिद्धिरपि मतान्तरे। प्राधान्यं हि साध्यघटकं महातात्पर्यविषयत्वम्। अयं चाभ्यासो हेतुतया विवक्षितो नान्नमयाद्युपासनाविधिषु वर्तते, इति पूर्वमेव निरूपितम्।

एतेन—निरतिशयशिरस्कतयाऽभ्यस्यमानानन्दवत्स्वरूपहेतोरपि क्रोडीकरणार्थमभ्यासादिति हेतुरिति—परास्तम्, अभ्यासपदेन तदर्थप्रतीतेरभावात्।

यथाच सूत्रान्तराणामप्यद्वैतमत एव स्वारस्यम्, तत्रत्यमपि

ब्रह्मविद्याभरणादिविवरणं साधीयः, तथा तत्तत्सूत्रप्रघट्टक एव समालोचितम् ।

अयमत्र निष्कर्षः—आनन्दमयपर्याय आनन्दमयोपासनाविधानार्थमिति वृत्तिकारमतम्, प्रियादिशिरस्कतया बुद्धावारोहार्थमानन्दमयपर्याय इति श्रीभाष्यानुसारिमतम्, जीव-तदधिष्ठानब्रह्मोभयनिरूपणद्वारा प्रत्यगभिन्नपरमात्मस्वरूपनिरूपणार्थमानन्दमयपर्याय इत्यद्वैतमतम् । तत्राद्यमते जगद्व्यपारवर्जब्रह्माभेदस्यैव मुक्तित्वात् तस्योपासनासाध्यत्वस्यापि स्वीकारादानन्दमयोपासना नासंभाविता । एतेन—ईदृशमुक्तेर्ब्रह्मोपासनाफलत्वाभावस्य तत्क्रतुन्यायसिद्धतयाऽत्रानन्दमयोपासना न संभावितेति—परास्तम् । तृतीये—"तस्माद्वा एतस्मादि"ति प्रस्तुतकारणत्वस्य परिणममानाविद्याविषयत्वरूपाधिष्ठानत्वरूपत्वात् तस्य च शुद्धब्रह्ममात्रसम्बन्धित्वात् पुच्छब्रह्मणोऽपि कारणत्वादिनिर्देशो नानुपपन्नः । कारणत्वमीश्वरनिष्ठमित्यादिव्यवहारस्येश्वरानुस्यूतचैतन्याभिप्रायत्वमेव, न विशिष्टेश्वराभिप्रायत्वमिति हि सिद्धान्तलेशसंग्रहादौ व्यक्तम् ।

एतेन—"आत्मन आकाशः संभूतः" इत्यादिनाऽऽकाशादिकारणत्वेन श्रुतस्यैव पुच्छब्रह्मत्वस्याभ्युपगमनीयतया तस्य चेश्वरनिष्ठस्य पुच्छब्रह्मणाऽन्वयासंभवाद् न पुच्छब्रह्मणोपसंहारोपपत्तिरित्यादि—परास्तम् ।

आकाशादिकारणत्वस्यापि पूर्वोक्तविधया शुद्धचैतन्य एव स्वीकारेण शुद्धब्रह्मप्रकरणस्य कुत्राप्यविच्छेदेन सर्वस्योपक्रमोपसंहारसाधारणस्य प्रकरणस्य शुद्धब्रह्मण्येव हि तात्पर्यम् । यथाच "यतो वाचो निवर्तन्ते" इत्यस्य वाङ्मनसागोचरत्वप्रतिपादनेऽपि "आनन्दं विद्वानि"त्यानन्दरूपस्य ब्रह्मणो वृत्तिव्याप्यत्वमात्रस्वीकारेण न विरोधः, तथाऽन्यत्र व्यक्तम् ।

सर्वथातु—"आनन्दमयोऽभ्यासादि"तिसूत्रं नानन्दमयब्रह्मतापरम्, किन्तु पुच्छब्रह्मण एव ज्ञेयप्राप्यब्रह्मत्वपरम्; तस्यैव सर्वान्तरत्वात्, "असन्नेव स भवती" त्यादीनां मान्त्रवर्णिकब्रह्मविषयाणां पुच्छब्रह्मप्राधान्य एव स्वारस्यात् "तस्यैष एव शारीर आत्मे"त्यानन्दमयपर्यायवाक्यस्यान्यथानुपपत्तेः, विज्ञानमयादन्यत्वस्य श्रुतित एव सिद्धत्वेनानन्दमयजीवतानिरासार्थमधिकरणप्रवृत्तेर्वितथत्वात्, "रसो वै सः" इत्यादीनां पुच्छब्रह्माविषयत्वे वैयर्थ्यापातात्, सर्वेषां सूत्राणां पुच्छब्रह्मवाद एव स्वारस्यात्, आनन्दमयब्रह्मतावादस्य बहुतरदूषणग्रस्तत्वाच्चेति सिद्धम्। अधिकं चात्र वक्तव्यमन्यत्र विस्तृतं भामतीकल्पतर्वाद्युपेतब्रह्मसूत्रभाष्यभूमिकादिषु।

सूत्रानुगुण्यसिद्धिनिबन्धखण्डनसमालोचनं तु तन्निबन्धकारैरेवान्यत्र सुष्ठु संपादितम्, इति चर्वितचर्वणभयात् ग्रन्थविस्तरभयाच्च नात्र क्रियते।

अतः पूर्वोक्तैर्हेतुभिः शङ्करभगवत्पादाद्युपवर्णितानन्दमयाधिकरणार्थस्यैव सुस्थत्वात्, सद्भिस्सम्यगादरणीयत्वात्, तत्रैव सूत्राणामुपनिषदां प्रमाणान्तराणां च स्वारस्यात्, अनुपपत्तिलेशस्यापि तत्राभावात्, श्रीभगवत्पादानुगृहीत एवोक्ताधिकरणार्थः सर्वेषां निःश्रेयसाय स्यात्, इति स एव सर्वाङ्गसुन्दरः, यत्र परेषामाक्रमणस्य लेशतोऽपि नावसरः, यश्च खलु सुरक्षितः सर्वेषु पुराणेतिहासादिष्वपीति शिवम्॥



# शुद्धाशुद्धपत्रिका



| अशुद्धम् | शुद्धम् | पृष्ठ० | पं० | अशुद्धम् | शुद्धम् | पृष्ठ० | पं० |
|---|---|---|---|---|---|---|---|
| तदर्थ ; . | तदर्थः | १ | ६ | नाम्य | नाभ्य | १८ | २६ |
| सिद्धन्तिनः | सिद्धान्तिनः | १ | १५ | ऽऽन्द | ऽऽनन्द | १९ | ८ |
| कामयते | कामयत | १ | १७ | कुल्म् | कूल्म् | ,, | १० |
| अयमत्र | अयमत्रा | २ | १० | सम्वन्ध | सम्बन्ध | २० | ४ |
| यत्रैकत्व | यत्रैकत्वं | ,, | १७ | थन्तिपर | र्थान्तर | ,, | ११ |
| न्तिममेन | न्तिमेन | ,, | २५ | केऽव्यथा | केऽन्यथा | ,, | १२ |
| वाङ्नसा | वाङ्मनसा | ३ | २० | कल्पत | कल्पित | ,, | १८ |
| भेप्रति | भेदप्रति | ४ | १ | कोपां | केपां | २१ | १० |
| पद्यम् | पाद्यम् | ,, | १३ | मनोय | मनोमय | ,, | १५ |
| चरश्रयो | चराश्रयो | ५ | २५ | विविक्षा | विवक्षा | ,, | १८ |
| व्यदेशः | व्यपदेशः | ६ | १ | प्रातिष्ठा | प्रतिष्ठा | २२ | २६ |
| कारण | कारणा | ५ | १८ | अन्नादीम | अन्नादीनाम | २३ | ८ |
| पदकं | पादकं | ,, | २६ | पर्यवासनम् | पर्यवसानम् | ,, | १६ |
| यम | मय | ८ | ५ | मयटर्थ | मयडर्थ | २५ | ६ |
| प्रयुक्तम् | प्रत्युक्तम् | ,, | २० | नम | नमा | २६ | २२ |
| क्ताना | क्तानां | १० | ५ | दुःखल्प | दुःखाल्प | २७ | १० |
| किंस्वा | किंस्वि | ,, | २० | सेऽक | सोऽका | ,, | २३ |
| स्वीकर | स्वीकार | ११ | १७ | चवं | चैवं | २९ | २ |
| प्रकान्त | प्रक्रान्त | ११ | १६ | कर्पाभावः | कर्पभावः | ३३ | २ |
| भेव | मेव | १३ | | सूत्रा | सूत्र | ३६ | १३ |
| दिशिष्ट | दिविशिष्ट | ,, | २२ | भ्रय | भ्रम | ,, | १३ |
| पसना | पासना | ,, | २२ | स्पष्ट | स्पष्ट | ,, | २४ |
| मिन्नं | भिन्न | ,, | २४ | सेऽकाम | सोऽकाम | ३७ | १७ |
| नन्दयः | नन्दमयः | १६ | १ | निर्दश | निर्देश | ,, | २२ |

| अशुद्धम् | शुद्धम् | पृष्ठ | प० | अशुद्धम् | शुद्धम् | पृष्ठ | प० |
|---|---|---|---|---|---|---|---|
| अत्रेसूत्र | अत्रसूत्रे | ४६ | ३ | कांक्षा | काङ्क्षा | ,, | २६ |
| व्यवृत्ति | व्यावृत्ति | ४४ | १० | यागा | योगा | ५६ | १४ |
| रादिभ्यः | ादिभ्यः | ,, | २५ | व्यव | व्याव | ,, | १८ |
| रीप्या | रीत्या | ४५ | ५ | अप्रो | अप्रयो | ६० | १५ |
| हेत्वात् | हेयत्वात् | ,, | १५ | पसना | पामना | ६१ | १६ |
| त्यद्वय | त्याद्वय | ४७ | ५ | द्वैविर्ग्यं | द्वैविध्यं | ,, | २० |
| सारत्वन् | सारत्वात् | ,, | १५ | तन्मत्र | तन्मात्र | ६२ | १३ |
| वाधित | बाधित | ,, | २४ | इत्यदि | इत्यादि | ६३ | १५ |
| प्रस्तोष्या | प्रस्तोष्य | ४८ | ७ | सब्द | शब्द | ६४ | ५ |
| प्रस्तोष्या | प्रस्तोष्य | ४८ | ८ | शक्यात्वात् | शक्यत्वात् | ६७ | ८ |
| वर्ज | वर्ज | ४६ | १८ | चाराम्भणं | चारम्भणं | ,, | १३ |
| कमान् | कामान् | ५० | १५ | ब्रहाण्य | ब्रह्मण्य | ७७ | २४ |
| नानान्दान् | नानन्दान् | ,, | १७ | समावाय | समवाय | ,, | २६ |
| गोरत्व | गोचरत्व | ,, | २६ | धर | धार | ,, | २७ |
| नान्दानां | नन्दानां | ५१ | १० | शेपे | शेप | ७६ | २ |
| सवानन्दा | सर्वानन्दा | ,, | ११ | च्छिठ्नं | च्छिन्नं | ,, | ५ |
| एवमेवं | एवमेव | ,, | २१ | प्रति | प्रती | ,, | ६ |
| प्रतिप्रति | प्रति | ,, | २४ | बहशः | बहुशः | ७६ | १४ |
| मधिक्या | माधिक्या | ,, | २६ | प्यशिष्टः | प्यविशिष्टः | ,, | १५ |
| पक्षया | पेक्षया | ५२ | ११ | ब्रह्य | ब्रह्म | ,, | २६ |
| विपश्चिता | विपश्चता | ,, | १८ | श्रोता | श्रौता | ७७ | ७ |
| काशावन् | काशवन् | ,, | ३ | श्रति | श्रुति | ,, | ६ |
| संकी | संकीर्त | ,, | १६ | इत्यभय | इत्युभय | ,, | २४ |
| दुर्दशं | दुर्दर्शं | ,, | २३ | भोदा | भेदा | ७८ | ४ |
| दुर्दशं | दुर्दर्शं | ,, | २४ | शक्ति | शुक्ति | ७६ | १० |
| त्मा"ति | त्मा"इति | ५४ | २० | हात्वा | हीत्वा | ८० | ३ |
| चोत्थं | चेत्थं | ५५ | २६ | काशधि | काशाधि | ,, | १६ |
| जाग | जग | ५६ | ५ | भावात् | भात् | ८१ | १४ |
| नातां | नायां | ५७ | १८ | दार्ष्टि | दार्ष्टा | ,, | २१ |

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृष्ठ | पं० |
|---|---|---|---|---|---|---|---|
| भवा | भावा | ८२ | ६ | पित्या | मित्या | ,, | २६ |
| घटदि | घटादि | ,, | १४ | सिद्धा | सिद्धो | १०१ | १० |
| समर्थम् | समर्थः | ,, | १५ | स्वण्ड | खण्ड | १०३ | १६ |
| नन्दरूपेण | नन्दरूपेणा | ,, | २२ | वद् | वाद् | १०४ | १६ |
| कालिपनि | कालपनि | ८३ | ६ | सको | सणको | १०५ | १४ |
| कृतेऽपि | कृतेऽपि | ,, | ९ | भाद्यात् | भवात् | १०९ | ४ |
| विशेप | विशेष | ,, | १० | तंन्ते | तैंते | ११२ | १२ |
| दादन्द | दानन्द | ,, | १७ | न्वाया | न्वया | ११५ | २२ |
| हारो | हारः | ८४ | १ | सभव | सम्भव | ११७ | २६ |
| तीनर | तीनर | ,, | २७ | प्रत्ना | प्रयत्ना | ११९ | ४ |
| धिष्ठान | धिष्ठान | ८५ | १६ | सपेक्ष | सापेक्ष | ,, | १४ |
| स्वण्ड | खण्ड | ,, | २० | दश | दर्श | ,, | १४ |
| नसन् | नसन् | ,, | २४ | श्येते | श्येत | ,, | २१ |
| ग्रध्यस | ग्रध्यास | ८६ | ६ | क्रिय | क्रिय | ,, | २२ |
| दिनां | दीनां | ८८ | ५ | प्राणया | प्राणमया | १२० | १ |
| काशात् | कारात् | ,, | १२ | पूर्वे | पूर्वो | ,, | २३ |
| धम | धर्म | ८९ | ३ | वाक्ये | वाक्य | १२१ | ६ |
| मव | सर्व | ,, | ८ | ति | इति | ,, | ८ |
| माले | मले | ,, | ९ | शोली | शैली | ,, | १७ |
| तदच्छिन्न | तदवच्छिन्न | ,, | १५ | पम्परा | परम्परा | ,, | २२ |
| चैतन्न | चैतन्य | ९० | ८ | विहितः | निहितः | १२३ | १९ |
| दिम्बन्धा | दिमम्बन्धा | ९१ | ११ | पर | परा | १२३ | २६ |
| भवेन | भावेन | ९३ | ३ | मार्शः | मर्शः | १२४ | १ |
| मात्र | न्मात्र | ९३ | ७ | प्रजात्या | प्रजापत्या | १२४ | २२ |
| धर्म्या | धर्म्या | ९४ | १८ | यागो | त्यागो | १२५ | ३ |
| कारन्त | कारान्त | ९५ | ५ | ययत्व | यवत्व | १२५ | १९ |
| केशः | केश | ,, | ११ | लवस्यै | लस्यै | १२७ | १२ |
| पेदेय | पादेय | ९६ | १४ | परास्त | परास्तम् | [illegible] | ६ |
| सद्धा | त्यद्धा | ,, | २५ | ग्धार | ग्राधार | १२८ | १६ |

| अशुद्धम् | शुद्धम् | पृष्ठ | प० |
|---|---|---|---|
| राभिमता | रभिमता | १२८ | २१ |
| तिष्ठति | तिष्ठिति | १२८ | २३ |
| जग्रत् | जाग्रत् | १२९ | २ |
| पस्तम् | पास्तम् | १२९ | १४ |
| ननु | न तु | १३० | १ |
| निदि | निर्दि | १३० | २१ |
| पूर्वेत्तर | पूर्वोत्तर | १३१ | ६ |
| पदमस | पदं स | १३१ | १८ |
| मययो | मयो | १३२ | १ |
| दिका | दिकाः | १३५ | ४ |
| विविक्षा | विवक्षा | १३५ | १५ |
| पत्यर्य | पत्यर्थ | १३५ | २३ |
| प्रिन | प्रिय | १३६ | १ |
| शिरत्त्वा | शिरस्त्वा | १३९ | १ |
| भित | भिमत | १४१ | २२ |
| मयया | मया | १४२ | १६ |
| दिंष्टम | दिंष्टम् | १४२ | २४ |
| ऽऽन्द | ऽऽनन्द | १४३ | १२ |
| कारणाम् | काराणाम् | १४३ | १६ |
| वदान्ति | वर्दान्ति | १४३ | २१ |
| यम | मय | १४५ | २ |
| निनित्त | निमित्त | १४७ | ४ |
| नत्य | नस्य | १४८ | १० |
| तद्ग | तद् गु | १४९ | १३ |
| सह्याः | सह्या | १५० | ११ |
| सधक | साधक | १५१ | १४ |
| तच्व | तत्त्व | १५३ | १२ |
| स्यव | स्यैव | १५३ | १३ |
| मुक्त | मुक्ता | १५४ | ८ |
| इत | उत | १५५ | १० |
| स्वष्ट | स्पष्ट | १५७ | १६ |
| यपूर्व | यःपूर्व | १५८ | ३ |
| दप | दूप | १५८ | ८ |
| सद्भाशङ्का | सद्भावशङ्का | १५९ | ७ |
| व्रह्मानन्द | ब्रह्मानन्द | १६० | ८ |
| अनन्द | आनन्द | १६१ | २ |
| छान्दा | छान्दो | १६४ | १ |
| लक्षणिक | लाक्षणिक | १६६ | १ |
| णाद्वैत | णामद्वैत | १६६ | ७ |
| पत्त्राय | पत्त्रय | १६६ | २१ |
| कानिचा | कानिच | १६६ | २४ |
| मनुप | मनु | १६७ | ३ |
| शशि | शयशि | १६७ | १६ |
| ज्ञिनम् | ज्ञितम् | १६८ | ४ |
| त्वन | त्वेन | १६८ | ५ |
| धक् | धृक् | १६८ | ६ |
| मरा | ममरा | १६८ | १६ |
| नाभय | नोभय | १६९ | २० |
| प्याम्रा | प्यत्रा | १६९ | २२ |
| नाभ | नाभा | १७१ | १५ |
| ति | इति | १७४ | ६ |

